'यः सर्वज्ञः सर्ववित्' इत्यादिवचनसिद्धसर्वविषयसामान्यज्ञानसर्वविषयाविशेषज्ञानादि गृह्यते । वैभवं सामर्थ्यम् । 'उत्तरार्धे स्तुतिशक्त्यभावविभवे' इति विभवशब्दो गृह्यते। 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इति शब्दैक्यस्य काव्यगुणत्वम्। 'रक्त एवास्तमेति च' इति शब्दवैरूप्यं काव्यदोष इत्यालङ्कारिकाः ॥

निजम् । सहस्रवदनेत्यनन्तस्य ग्रहणं स्यात् । आदिपदेन च गरुडविष्वक्सेनादीनाम् । तद्व्यावृत्त्यर्थं निजमित्युच्यते ॥

स रङ्गचन्द्रमाः । कलाभिर्निजशरीरदानेन प्रसिद्धोदारश्चन्द्रः। कान्तत्वमुदारत्वं च गम्यते । स इत्यौदार्यप्रसिद्धिर्द्योत्यते ॥

यदि किल मेऽर्पयेत् । यथा चन्द्रमा अर्पयति ।

अथ । तदा ।

शेषवत् । शेषो भगवद्दत्तसहस्रवदनवैभवः। तदायत्तसार्वज्ञ्यश्च। अनन्तोऽपि स न भगवद्गुणानामन्तमाप्नुयात्। गुणिनिष्ठगुणाभिधानं स्तुतिः । 'सम्यक्तत्त्वगुणाभिवर्णनपरं स्तोत्रम्' इति श्रीवत्साङ्कमिश्राः । भगवद्विषये केनापि तन्न साध्यं भवेत् । शार्ङ्गिणो गुणाः संख्यातुं नैव शक्यन्ते, तेषामानन्त्यात् ॥

तद्वदेव वा । तिष्ठतु शेषः। शेषिणोऽपि तत्त्वेन स्वगुणसम्पूर्णवर्णनमसाध्यमेव । 'को मज्जतोरणुकुलाचलयोर्विशेषः' इत्युक्तं भगवद्विषयस्तोतृविषये । स्वस्तुतिशक्त्यभावे स्वस्याप्यवैशेष्यमित्युच्यतेऽत्र ॥

मम च। ममापि। 'ममैवांशो जीवलोके जीवभूतः' इति भगवदुक्त्याऽहं तदंशः । अंशभूतोऽहं तदानन्दादिवैभवे अंशभाक्। समश्च ममांशो भगवता। न मनागपि वैषम्यम्। तेन परमं साम्यं ममांशः।

स्तुतिशक्त्यभावविभवेऽपि भागिता। सहस्रवदनादिवैभवमस्माकं दीयते स्तुतिशक्तिसिद्धिहेतोः। स्तुतेरसाध्यत्वात्तन्निष्फलं भवति। स्तुतिर्न

सिध्यति, वैभवदानेन कथं परिभवलाभ इत्याक्षिप्येत। तत्रोच्यते। वैभवमेव फलितमिति। किं तद्वैभवमिति चेत् स्तुतिशक्त्यभाववैभवम्। तस्मादानुरूप्यमेव वैभवदानेन विभवलाभ इति। ईश्वरचिह्नभूतलक्ष्मीपतित्वजगत्कारणत्वाद्यैश्वर्यादृते सर्वं भगवद्वैभवं तत्साम्यमापन्नानां सर्वेषां समानम्। ते सर्वेऽपि भगवता समानभागिनः। अस्मिंस्तुतिशक्त्यभावेऽपि ते भागिनः स्युः साम्यस्य परमत्वात्। स्तुतिशक्त्यभावस्य कथं विभवत्वमिति चेत्—अभावविभवोऽयम्, न भावविभवः। दोषाभावो विभवः स्यात्। भावान्तराभाववादिनो वयम्। स्तुतिशक्त्यभावो विभवानन्त्य एव पर्यवस्यति; विभवानन्त्यं च भावरूपम्। यद्यप्यभाव इव सः, तस्य भावे पर्यवसानम्। 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यनन्तज्ञानशक्तेरपि भगवतो यदि स्वगुणवर्णनमशक्यमनन्तवैभवमेव तेन तस्य सिध्येत्। एवं च भगवतः स्वस्तुत्यशक्तिः स्वविभवानन्त्यपर्यवसायिनी। भगवत्स्तुत्यशक्तिः कथमस्मद्विभवो भवेदिति चेत्—दत्तोत्तरमिदं पूर्वश्लोकेन। स्तुतिर्नाम स्तूयमानगुणेयत्तापरिच्छेदः। परिच्छेत्तुमशक्यमित्यशक्तिपरिज्ञानमस्माकं ज्ञानित्वविभवं सम्पादयति। अपिशब्देन विभवान्तरे भागिता सिद्धेति द्योत्यते। 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम्॥' इति भगवान्। सर्वस्यापि चेतनाचेतनजातस्य भगवदंशत्वेऽपि विभूतिमत्सर्वं भगवत्तेजोंशसम्भवं न केवलमंशमात्रमित्यभिप्रेयत इव। निजमिति नैजमनारोपितमित्यप्यर्थः स्यात्। निजं वैभवं सहस्रवदनत्वादिकम्। स्तुतिशक्त्यभावो युक्त्या विभवत्वेन कल्प्यते। यौक्तिकोऽयं विभवो न निजो वास्तवः। यथा निजेऽनारोपिते विभवे भागिता; तथा कल्पितविभवेऽपि भागितेत्यपिशब्देन द्योत्यत इव। सहस्रवदनत्वेऽपि स्तुत्यशक्तिः शेषस्य भगवतश्चास्ति। तावुभावेव तादृशविभवे सत्यप्यशक्तिभागिनौ। यदि मे सहस्रवदनादिवैभवं दीये-

त्वाहमपि तादृशाशक्तिविभवे तृतीयो भागी स्यामित्यपि भावः । यथा भाववविभवेषु भागिता तथाभावविभवेषु भागितेत्यपि द्योत्यतेऽपिशब्देन । सहस्रवदनादिवैभवदानं स्तोतृत्वप्रसक्तिलाभाय ॥ १४ ॥

**सो अङ्ग वेद यदि वा न किलेति वेदः**
**सन्देग्ध्यनर्घविदमात्मनि रंगनाथम् ।**
**स्थाने यदेष खलु दोषमलीमसाभि-**
**र्मद्वाग्भिरैशमतिशायनमावृणोति ॥ १५ ॥**

किं युक्त्योच्यते भगवानपि स्वमहिमपरिच्छेदाशक्त इति? उतास्ति तत्र किमपि प्रमाणम् ? अस्ति वेदरूपमूलप्रमाणमित्युच्यते ॥

**सोऽङ्ग वेद न किलेति वेदः सन्देग्धि** । 'सोऽङ्ग वेद यदि वा न वेद' इति श्रुतिः । 'यः सर्वज्ञः सर्ववित्' 'स्वाभाविकी ज्ञानबलक्रिया च' इति दृढं वदन्ती श्रुतिः संशयं प्रकटयतीव तस्य स्वमहिमपरिज्ञाने । यदि श्रुतेरेव सन्देहः कस्तत्र निर्णेतुं प्रभवेत् । श्रुतिर्भगवति परमगौरवेण सन्देहमात्रं वक्ति । अज्ञाननिश्चय एव तस्याः । पूर्वोक्तपक्षारुच्या 'यदि वा न वेद' इत्युत्तरो मुख्यः पक्षः । स्वमहिम्नोऽनन्तत्वात् तस्यापरिच्छेद एव सर्वज्ञताया अनुगुणम् । इतरथा भ्रान्तता भवेत् ॥

**आत्मन्यनर्घविदम्** । स्वविषये महिमानभिज्ञम् । स्वार्घानभिज्ञम् ॥

**स्थाने** । युक्तम् । स्वमाहात्म्यानभिज्ञत्वस्य माहात्म्यापरिच्छिन्नत्वेन समर्थनं पूर्वश्लोके । अत्र तस्यैव प्रकारान्तरेण विचित्रं समर्थनम् ॥

**यदेष खलु** । यूयं खलु स्तोतारः । दोषमलीमसा वाचो युष्मद्वाचः । युष्माकं खलु स्तुतिकर्तृत्वम् । कथं भगवानेव स्तुतिकर्तेति कृत्वा दोषवत्या स्तुत्यात्मानं मलिनयतीत्युच्यत इति चेदुच्यते— न खल्वहं

स्तुतिकर्ता । नास्य सहकारमनुमतिं वा विना किञ्चिदपि क्रियेत मया । 'दैवं चैवात्र पञ्चमम्' इति हेतुपञ्चके स्वस्याप्यन्तर्भाव इति तेनैवोक्तं खलु इदं सर्वं विवक्ष्येत प्रसिद्धिद्योतकखलुशब्देन 'यदेषः' इति च ।

**दोषमलीमसाभिर्मद्वाग्भिः** । यथा स निर्दोषो गुणपूर्णश्च, तथा मद्वाचो गुणरहिता दोषपूर्णाश्च । अनन्तरश्लोके निर्दोषाः संस्कृतद्राविड-वेदसूक्तयो गृह्यन्ते । तद्विरुद्धस्वभावा मद्वाचः ॥

**पेशमतिशायनमावृणोति** । परगतातिशयाधानार्थमेव शेषस्य मम स्वरूपमिति श्रूयते । 'शेषः परार्थत्वात्' 'स्वमुद्दिश्य श्रीमान्मामु-मुपादत्ते सत्तास्थितिनियमनाद्यैः ।' शेषस्य मम वाग्भिः स्वस्य पूर्वसिद्धं निरतिशयमतिशयमावृणोतीति विचित्रमिदम् । न केवलमतिशयानाधाय-कत्वम् , किं तु पूर्वसिद्धातिशयह्रासकरत्वमपीति द्योत्यते ॥

**स्वं संस्कृतद्राविडवेदसूक्तै-**
**र्भान्तं मदुक्तैर्मलिनीकरोति ।**
**श्रीरङ्गकम्रः कलभं क एव**
**स्नात्वाऽपि धूलीरसिकं निषेद्धा ॥ १६ ॥**

स्तवप्रिय इति तपोधनेन भीष्मेणोक्तम् । तदवन्ध्ययितुं स्तवरसिक आत्मानं मत्स्तुतिभिर्मलिनयतीति चेत् सन्ति भूयांसि तत्स्तवरूपाणि वेद-सूक्तानीत्युच्यते । स्तवान्तरालाभादात्मस्तवेन स्तवरसं तर्पयतीति वक्तुं न शक्यम् । 'स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहुः' इति स्वमलिनीकरणेऽपि तत्स्वाच्छन्द्यमपर्यनुयोज्यमित्येव समाधिर्वरम् ॥

**स्वम्** । स्वतो निरतिशयदीप्तिमन्तं तेजसां राशिमूर्जितम् । वेदादिप्रकाशकान्तरं विनाऽपि स्वतो भास्वरम् ॥

**संस्कृतद्राविडवेदसूक्तैः स्नात्वा भान्तम्** । योगमायासमा-वृतत्वादप्रकाशत्वादुज्ज्वलैर्वेदसूक्तैर्विशेषतो भास्यते । स्तवरसिको भगवा-

न्विचित्रवेदस्तवैर्दृष्टोऽधिकं प्रसादादिना शोभते । संस्कृतद्राविडेति क्रमो दर्शनकालपौर्वापर्यप्रयुक्तः । 'प्राचीनानां श्रुतिपरिषदां पादुके पूर्वगण्या' इति दिव्यदेशेषु दृष्टक्रममनुसृत्य द्राविडवेदस्याभ्यर्हिततरत्वाश्रयणे भाषयोः प्रकृतिविकृतिभावेन प्रकृतिभूतसंस्कृतस्य पूर्वग्रहणम् । सूक्तैरिति स्वोक्तेर्दुरुक्तत्वं द्योत्यते । उत्तरार्धे स्नात्वापीति स्नानमुच्यते । स्नानेन शोभाधिक्यं सहजम् । अत्रापि वेदसूक्तैरभिषेको व्यज्यते । वेदसूक्तपठनसहकृताभिषेकेनाधिकभास्वरत्वं 'सूक्तैर्भानम्' इत्यनेन व्यज्यते । अर्चाभूतस्य श्रीरङ्गराजस्य वेदसूक्तैरभिषेककाले जायमाना शोभाऽनुभवसिद्धा । अभिषेककाले तदनन्तरं वा मदुक्तान्यपि शृणोति प्रभुः । 'भूयो भट्टपराशरेति फणितः श्रीरङ्गभर्ता स्वयम्' इति भूयो नाम्ना मामाहूयाभिषेकावसरे पराशरभट्टार्यश्रीसूक्तीः श्रावयेत्याज्ञापयति । वेदसूक्तैः स्नात्वा भान्तमात्मानं मद्दुरुक्तैर्मलिनीकरोति रङ्गकलभ इत्याचार्यो विस्मयमापद्यते । स्नात्वेत्यत्राप्यन्वेति ॥

**मलिनीकरोति** । स्वतो निरञ्जनं वेदसूक्तानुपाठैः सह निरञ्जनं यथा तथा स्नापितमात्मानं साञ्जनं करोति । अभूततद्भावे च्विः । इतः पूर्वमभूतं तस्य मालिन्यं मत्स्तवेन निष्पाद्यते ।

**श्रीरङ्गकभ्रः**। यद्यपि मत्स्तुत्यात्मानं रञ्जयतीति मम हर्षो न्याय्यस्तस्यात्यन्तं कमनीयस्य यूनो लावण्यं शुद्धत्वेनाधूसरितत्वेनानुबुभूषामि । तस्य कभ्रस्य तदिच्छया मत्स्तवसंयोगेनापि धूसरितत्वमहं न सहेय । स्वात्मभूतशोभिवस्तुनो निरंजनत्वरक्षणे तावानादरः ।

**कलभं क एव स्नात्वापि धूलीरसिकं निषेद्धा**। बहुप्रकारैः सदृशमुपमानं प्रदर्श्यते । 'कुञ्जरशौचवत्' 'गजस्नानमिव' इति प्रसिद्धो न्यायः । कलभश्च स्नानानन्तरक्षण एव स्वहस्तोत्क्षिप्ताभिर्धूलिभिरात्मानं धूसरयति । न वयं तं प्रष्टुं निषेद्धुं वा प्रभवेम । तदुद्यमश्चानर्थावहो

भवेत् । स्वतन्त्रमीश्वरं कथं निषेधेम । 'क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्' इति नियाम्यजनेऽपि गुरुजनस्य मातुर्निषेधासमर्थतोच्यते ॥ १६ ॥

**किं तु प्रपत्तिबलतारितविष्णुमाया-**
**मद्वंश्यराजकुलदुर्ललितं किलैवम् ।**
**श्रीरङ्गराजकमलापदलालितत्वं**
**यद्वापराध्यति मम स्तुतिसाहसेऽस्मिन् ॥ १७ ॥**

अहं कर्तेति कृत्वा स्तवेन मद्दूषणं मय्येवारोप्यत इव । किं त्वं न कर्ता? त्वदुदाहृतगीताश्लोके 'अधिष्ठानं तथा कर्ता' इति भवतोऽपि कर्तृत्वमुक्तम् । यद्यपि मदायत्तं त्वत्कर्तृत्वं त्वत्कृतप्रयत्नापेक्षो ह्यहमनुमतिदानेन त्वया सह कर्ता । त्वत्प्रयत्नं विना कथमहं त्वां कारयेयम्? कुर्वन्तमेव भवन्तमहं कारयामि । अतस्त्वमपि कर्ता । कथं तव स्तुतिसाहसे प्रवृत्तिरिति भगवता पृष्टे उच्यते—अत्र द्वयोरन्यतरत्कारणम् । कुलाचारो वा स्तूयमानकर्तृकलालनं वा कारणम् । कुलाचारस्य प्राबल्यम् । 'कुलधर्माश्च शाश्वताः' इति गीता । 'दाक्षिण्यं नाम बिम्बोष्ठि बैम्बिकानां कुलव्रतम्' इत्यग्निमित्रो राजा । यद्वेत्युक्तोत्तरपक्षे स्तुतिसाहसापराधो भगवत्येव पुनर्निपुणमारोप्यत इत्यवधेयम् ।

किं तु । स्तुतिसाहसप्रवृत्तिर्मय्यारोप्येत शास्त्रबलात् । किं तु नाहं कर्ता । भगवदनुमतः कुलपरंपरागताचारोऽपराध्यति । कुलक्रमागतवन्दिनो वयं श्रीरङ्गराजस्य । मामर्भकवद्दिव्यदम्पती पदकमलैर्लालितवन्तौ । तच्च तत्पदलालनमपराध्यति । तत्प्रयुक्तलाल्भ्यप्रत्ययं विना नावतरेयं साहसे ।

**प्रपत्तिबलतारितविष्णुमायामद्वंश्यराजकुलदुर्ललितं किलैवम् ।** 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति प्रपत्तिबलेन मायातरणं

प्रसिद्धम् । अत्र तारणमुच्यते, न तरणमिति रसिकैरवधेयम् । स्वतारणं चाचार्यरूपपुरुषकारेण । 'तव भरोऽहमकारिषि धार्मिकैः' इत्युत्तरत्रोच्यते । प्रपत्तिबलेन तारिताः । आचार्यकर्तृकप्रपत्त्या अवशेन बलात् तारिता इति वा । 'मम माया दुरत्यया' इत्युक्ता विष्णुमाया । विष्णुमायेति दुरत्ययत्वं द्योत्यते । तत्तरणाय भूयो बलोपेक्षेति बलशब्देन व्यज्यते । विष्णोर्मायाऽपि विष्णुवद्विश्वव्यापिनी वैष्णवी । मायाया अपि विष्णुत्वम् । असंद्वेश जनिमात्रमलं मायातरणाय । अस्त्याचार्यप्रपत्तिबलमस्माकम् । राजकुलत्वं 'राजपुत्रापराधवत्' इत्यपराधस्य मर्षणीयतां द्योतयति । राजशब्देन यतिराजग्रहणम् , कूरेशग्रहणम् ; उभयग्रहणं वा । श्रीरङ्गराजपरिजनत्वादस्माकं तद्राजकुलान्तर्गतत्वं च । दुर्ललितं चाधिकलालितत्वप्रयुक्तधाष्टर्यनिर्भीकत्वादि । भगवत्स्तुतिसाहसरसिकत्वप्रयुक्तवैयात्यमेवमपराध्यति ॥

**श्रीरङ्गराजकमलापदलालितत्वम्** । भूयो लालनं कृतं स्वपदकमलैः । कुसुमैरर्भकानां लालनं क्रियेत । कमलापद इति कमलाग्रहणेन पदस्यापि कमलत्वं व्यज्यते । 'पादेन कमलाभेन ब्रह्मरुद्रार्चितेन च । पस्पर्श पुण्डरीकाक्ष आपादतलमस्तकम् ॥' इति द्रौण्यस्त्रविप्लुष्टाङ्गस्य गर्भस्थस्य परीक्षितो विषये । पूर्वार्धे राजकुलजत्वापराधः । अत्र राजापराधः । सर्वथा न प्रजापराधः । उभयत्र राजशब्दग्रहणेनेदं व्यज्यत इव ॥

**यद्वाऽपराध्यति मम स्तुतिसाहसेऽस्मिन्** । अयमेव मुख्यः पक्षः । स्तूयमानावेव यदि लालनेन मां निर्भीकं कुर्याताम्, तदेव मुख्यं कारणं भवेत् ॥ १८ ॥

**नाथस्य च स्वमहिमार्णवपारदृश्व-**
**विज्ञानवाग्विलसितं सहते न वेदः ।**

**आपेक्षिकं यदि तदस्ति ममापि तेन**
**श्रीरङ्गिणः स्तुतिविधावहमध्यकार्षम् ॥ १८ ॥**

साहसिकेनापि नानधिकृते कर्मणि प्रवर्तनं न्याय्यम् । भवतामधिकारोऽस्ति वा न वेति विचारणीयम् । अर्थित्वे सति सामर्थ्यमधिक्रिया-घटकम् । अर्थित्वं काममुपपादितं साहसरुचिप्रख्यापनेन । सामर्थ्यं च वैदुष्यं वाग्विलसितं चाक्षिपति । स्तवोचितज्ञानादिकं नास्तीति भवद्भिरेवोच्यते । कथमनधिकृतस्याधिकारसम्भवः ? स्तुतिविधा-विति विधिशब्देन , अध्यकार्षमित्यधिकारकीर्तनेन चेदृश आक्षेपो गम्यते ॥

वेदः । अधिकारानधिकारविचारे प्रसक्ते वेद एव प्रमाणम् । तं पृच्छामः । स्तुतिविधौ कोऽधिकारी । स्तुतेः स्वयंप्रयोजनत्वे तुष्टूषा, स्तुतिसामर्थ्यघटकविज्ञानवाग्विलसितं चापेक्ष्येते । अस्ति तुष्टूषा भूयसी । स्तुत्युपयुक्तविज्ञानवाग्विलसितमपेक्षितम् । स्तुतिश्च सम्यक्त-त्त्वगुणाभिवर्णनम् ॥

**नाथस्य च स्वमहिमार्णवपारदृश्वविज्ञानवाग्विलसितं न सहते**
नाथस्य स्वस्तुत्युपयुक्तविज्ञानवाग्विलसितं नास्ति । अनन्तस्तस्य महिमार्ण-वः । तन्महिमार्णवपारदर्शित्वं तत्स्तुत्युपयुक्तशक्तिमत्त्वम् । सर्वशक्तेरपि तदनुकूलशक्तिकार्त्स्न्यं न भवेत् । तथा च सर्वस्याशक्तता । यथार्थ-स्तुतौ यदि न कोऽपि मुख्याधिकारी , कथमधिकार्यनधिकारिव्यवस्था नि-र्बन्धुं शक्या । भूयो भगवत्स्तवो दृश्यते प्रमाणग्रन्थेषु । शक्तिकार्त्स्न्यं नाधिकारकोटौ निविशेत । अमुख्या आपेक्षिकशक्तिरेवाधिकारत्वेन ग्राह्या । स्तोतेति भगवन्नाम । न तस्य स्तुत्यान्तरमस्ति । स्वस्तोत्रं विना तस्य तन्नाम वन्ध्यं भवेत् । अत एव भगवान् शठकोपादिव्याजेनात्मानं स्तौतीति प्रबन्धद्रष्टृ-भिरुच्यते । तस्य स्वगुणस्तोत्रेऽधिकारः कृत्स्नशक्तिं विनाऽप्यापेक्षिकशक्तिमात्रेण निरुह्येत । ममाप्यापेक्षिकामुख्याधिकारः सुलभः । नाथस्य स्वमहिमार्णवपा-

रदृश्वत्वरूपपूर्णशक्तिं न सहते वेदः । आपेक्षिकशक्तिं तु सहते। भगवतः स्व-स्तुत्यशक्तिं सहते वेदः । तन्महिमार्णवस्य पारवत्त्वापादिकां स्वस्तुतिशक्तिं तु न सहते । तावान्वेदस्य नाथमहिम्नोऽपारत्त्वे पक्षपातः । काममशक्तो भवतु नाथः, अवाकी भवतु सः ; अज्ञो वा भवतु । मा तन्महिमा परिच्छेदं गमत् । वेदत्वाद्वेदोऽनन्तस्य परिच्छेदं न सहेत । वेदयतीति वेदः । अलौकिकवस्तुविषययथार्थज्ञानजनकत्वमेव तत्कृत्यम् । नाथमहिमानन्त्यं खलु तत्त्वम् । नाथेनापि तत्परिच्छेदं तत्त्वबोधको वेदो न सहते । 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति सर्वश्रेष्ठस्य जगद्गुरोर्नाथस्याचरणं सर्वानुष्ठापकं भवेत् । स्तोतेति तपोधनवर्णितस्य तस्य पूर्णशक्त्यभावेऽपि स्वस्तोतृत्वमितरेषामस्मदादीनां पूर्णसामर्थ्याभावेऽपि तत्स्तोतृत्वमभ्यनुजानाति । नाथस्य चेत्यनेन जगद्गुरोराचरणस्यास्मदनुष्ठापकत्वं व्यज्यते । नाथस्यापि शक्त्येकदेश एव । शक्त्येकदेशो ममाप्यस्ति, यद्यप्यल्पाल्पः । कुलाचलपरिमाणास्तु नाथशक्तिः । अणुप्रमाणा भवतु मच्छक्तिः । न तावता तारतम्येन ममाधिकारलोपः । यथाशक्ति स्तवनसामर्थ्यमधिकारप्रयोजकम् ॥

**आपेक्षिकं यदि तत्** । नाथस्य स्वस्तवाधिकारो यदि तस्य पारदृश्वत्वोपयुक्तसम्पूर्णविज्ञानाद्यभावेऽप्यापेक्षिकतच्छक्त्या निरुह्येत, मद्विषयेऽपि सापेक्षिकत्वाश्रयणगतिः समाना ॥

**तेन** । पञ्चावयववाक्यगर्भः श्लोकः । तेनेति निगमनप्रारम्भः ।

**श्रीरङ्गिणः स्तुतिविधौ** । विधिशब्दो विध्याक्षिप्ताधिकारादिविचारमपि प्रसञ्जयति ॥

**अहमध्यकार्षम्** । निगमनवाक्येनाधिकारस्य सिद्धत्वं कीर्त्यते लुङा । न वर्तमानप्रयोगो वा भविष्यत्प्रयोगो वा ॥ १८ ॥

**अन्यत्रातद्गुणोक्तिर्भगवति न तदुत्कर्षचौर्यात् परेषां**
**स्तुत्यत्वाद्यावदर्थाफणितिरपि तथा तस्य निस्सीमकत्वात् ।**
**आम्नायानामसीम्नामपि हरिविभवे वर्षबिन्दोरिवाब्धौ**
**सम्बन्धात्स्वात्मलाभो न तु कबलनतः स्तोतुरेवं न किं मे ॥ १९**

'वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः को मज्जतोरणुकुलाचलयोर्विशेषः' इति यामुनाचार्याः । 'कथं तादृशी वाग्वाचस्पतिनाऽपि शक्यरचना त्वत्सद्गुणार्णोनिधौ' इति श्रीवत्साङ्कमिश्राः । स्तोत्रलक्षणं च विकल्पमुखेन शोधितं तैस्तच्छ्लोके, तद्रीतिरनुरुध्यते । उपोद्घातश्च समाप्यतेऽस्मिञ्छ्लोके । अनन्तरश्लोके कावेरीवर्णनारम्भः । स्तवसिद्ध्यर्थं स्वात्मलाभः संपाद्यते । स्तोतारं विना कथं स्तुतिः सिद्ध्येत् ?

**अन्यत्रातद्गुणोक्तिर्भगवति न** । 'यद्यन्यदीयान् गुणानन्यत्र त्वसतोऽधिरोप्य फणितिः' इत्येकमनभिमतं लक्षणं विकल्पप्रथमशिरस्त्वेन । अन्यत्रेति स्तूयमानवस्तुपरामर्शः । अन्यत्र त्वसतः स्तूयमाने वस्तुन्यविद्यमानानन्यदीयान् गुणांस्तूयमानभिन्नवस्तुनिष्ठान् गुणानधिरोप्य फणितिः स्तूयमानवस्तुन्यसतो गुणानारोप्य वितथोक्तिः स्तुतिरित्येकः पक्षः । स पक्षोऽनूद्यतेऽत्र 'अन्यत्रातद्गुणोक्तिः, इति । अन्यत्रेति स्तूयमानवस्तुपरामर्शः । तस्मिन् वस्तुन्यन्यत्र शब्दप्रयोग उदाहृतपितृश्लोकरीत्या । अतद्गुणोक्तिः स्तूयमानेऽविद्यमाना गुणा अतद्गुणाः । स्तूयमाने तदुक्तिरतद्गुणोक्तिः । तच्छब्देन स्तूयमानवस्तुपरामर्शः । एवंरूपा स्तुतिर्भगवति न सम्भवेत् ॥

**तदुत्कर्षचौर्यात् परेषां स्तुत्यत्वात्** । न प्रतिज्ञामात्रं साधकं भवेत् । हेतुः प्रदर्श्यताम् ? हेतुरुच्यते—उत्कर्षवचनं स्तुतिः । गुणकृत उत्कर्षः । भगवतोऽन्यत्र न स्वत उत्कर्षोऽस्ति । यद्यस्ति अनुजिघृक्षया तद्दत्त एव स्यात् । भगवति विद्यमानमुत्कर्षं तत उत्कृष्य गृहीत्वा स्तूयमानवस्तुनि निवेशनीयं स्तोता । तच्चासद्गुणवर्णनं न वस्तुस्वभावावितथवर्णनं भवेत् । 'स्वाभाविकी ज्ञानबलक्रिया च' इति भगवद्गुणाः

स्वाभाविकाः । भगवतोऽन्यत्र दृश्यमाना भगवद्गुणलेशा न स्वाभाविकाः; किं तु तद्दत्तास्तदिच्छाधीनाः । उत्कर्षस्य स्वाभाविकत्वेन वर्णनं खलु क्रियते स्तोत्रा । तच्चात्यन्तं वितथमेव । यदि तत्त्वमनपलभ्य स्तूयमानवस्तुदृष्टोत्कर्षो भगवद्दत्तोत्कर्षस्तत्तेजोंऽशसम्भव इति स्तोत्रा कविनोच्येत भगवानेव स्तुतः स्यान्न तुष्टूषितं वस्तु । 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥' इति यत्र यत्र स्तुत्यर्होत्कर्षो दृश्यते तत्र तत्र दृष्ट उत्कर्षो भगवतस्तेजोंशसम्भव इति ज्ञेयं इति भगवान् । एवंभूतायां तत्त्वस्थितौ यदि कश्चित् स्तोता भगवद्व्यतिरिक्तमुत्कर्षवद्वस्तु स्तुयात् ; तत्र दृष्टस्योत्कर्षस्य भगवत्तेजोंशसम्भवत्वात् स्तूयमानस्यास्वाभाविकत्वादस्वत्वाच्चास्वभावभूतेनोत्कर्षेण स्वभाववर्णनरूपस्तुतिः कृता स्यात् । स्तूयमानस्योत्कर्षस्य तात्त्विकं भगवदीयत्वमपलभ्य चौर्येणैव स्तुतिः क्रियेत । एवं चौर्यमुपपादितं भवति ॥

**यावदर्था फणितिः** । अविद्यमानगुणारोपणेनाधिकवर्णनमशक्यं स्यात् । विद्यमानार्थमात्रवर्णनं कुर्मः । यावदर्था फणितिः स्तुतिः । सा च सुशकेति चेत्—

**अपि तथा** । साऽपि पूर्ववन्न शक्या ॥

**तस्य निःसीमकत्वात्** । तत्र हेतुरुच्यते । तस्य वर्णनीयस्य विद्यमानार्थस्य निरवधिकत्वात् ॥

**असीम्नामप्याम्नायानाम्** । निःसीमकत्वादशक्येत्युक्तम् । सान्तैः निःसीमगुणस्तुतिरसाध्या स्यात् । अनन्तैः वेदैः कथं तदनन्तमहिम्नोऽपरिच्छेदः ? 'अनन्तजिह्वेनानन्तेन , अनन्तशाखैराम्नायैः ; साक्षात् सरस्वत्या च दुरुदाहरमहिमा । ' इत्याचार्याः सहस्रनामभाष्ये । यद्यपि वेदा बहवो ऽनन्ताश्च , तेषामपि निःसीमकत्वात् । इदं पूर्वत्रोत्तरत्र चान्वेति । एकैकगुणावधीप्सया प्रवृत्ता वेदा.... ....निलिल्यिरे 'यतो वाचो निवर्तन्ते अ-

प्राप्य मनसा सह' इत्युक्त्वा । यद्यप्यसीमानोऽनन्ता वेदास्तेषां हरिवि-भवसम्बन्धादेव स्वात्मलाभः । तत्सम्बन्धं विना वस्तुसत्तयाऽनन्तानामपि वेदानां स्वात्मैव न सिध्येत् । सतो लक्षणमुक्तं वेदेनैव 'अस्ति ब्रह्मेति चेद्वे-द सन्तमेनं ततो विदुः असन्नेव स भवत्यसद्ब्रह्मेति वेद चेत्' इति । वेदो-ऽपि ब्रह्माऽस्तीति वेद चेद्वेदः स्यात् । न वेद चेत् वेदो न स्यात् । वेद-वाक्येनैव वेदस्य ब्रह्मविभवसम्बन्धात् स्वात्मलाभ उन्नीयते । ब्रह्मवेदनं च 'अनन्तं ब्रह्म' इत्यानन्त्यवैशिष्ट्येन ॥

**हरिविभवे** । हरिगुणविभवसागरे । विभवसागरसम्बन्धात्तत्रान्तः प्रविष्टत्वं द्योत्यते । न बिन्दुः सागराद्बहिः स्थित्वा तेन सम्बध्यते । सा-गरे पतित्वैव तदविभागमापद्य तेन सम्बध्येत । सागरे निपत्य तत्र मज्ज-नेनैव तस्य स्थिरत्वलाभः । बहिरवस्थितश्चेदातपे मृदि वा शोषणेन विल-यमियात् । अपृथक्सिद्धतैकस्वरूपस्वभावस्य पृथक्स्थितिः पार्थक्यमसिद्धि-हेतुः । अपार्थक्यं च सिद्धिहेतुः । अविभागे स्वरूपानपायः । विभागे चापायः । तस्मिन्नेव स्थितेः स्थितिः । तत्रानवस्थितेः प्रच्युतिः । 'अवस्थि-तेरिति काशकृत्स्नः ।' 'अविभागेन दृष्टत्वात्' इति सौत्रं प्रदर्शनम् ॥

**वर्षबिन्दोरिवाब्धौ** । 'यथा नद्यः स्यन्दमानाः समुद्रे' 'यथोद-कं शुद्धं शुद्धे प्रसिक्तम्' इत्यादिश्रौतदृष्टान्तभावप्रदर्शनम् । वाग्वर्षो वेदेन; कविभिश्च । हरिविभवसागरे पतिताश्चेद्वाग्वर्षबिन्दवस्ते स्वात्मलाभं लभेरन् । अन्यत्र पतिताश्चेच्छुष्येयुः । नीरसाः शुष्का भवेयुः ॥

**सम्बन्धात् स्वात्मलाभः** । तत्रावस्थितिरूपस्तदपृथक्सिद्धिरूपः सम्बन्धः । हरिविभवसागरे पतनरूपसम्बन्धेन मौक्तिकत्वं च सिद्ध्येत् । मौक्तिकत्वसिद्धये नात्र स्वात्यादिपुण्यकालविशेषापेक्षा ॥

**न तु कबलनतः** । कथं बिन्दुः सागरं चुलकयेत् ? कथमसद्वा-ग्वर्षबिन्दवोऽपारं हरिगुणपारावारं चुलकयितुं प्रभवेयुः । यद्यपि प्राकृतः

परिमितः सागर आचान्तः कुम्भयोनिना मुनिना हरिविभवाब्धिर्नानन्तैरप्याम्नायैश्चुलकयितुं शक्यः । न सागरो बिन्दौ मज्जेत् । बिन्दुस्तु सागरे मज्जनेनानपायां स्थितिं लभेत । 'सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥'

स्तोतुरेवं न किं मे । किं मय्येकस्मिन्नव्याप्तिरस्य न्यायस्य । किं मदेकवर्जमस्य न्यायस्य प्रसरणम् ॥

**कावेरीमवगाहिषीय भगवद्भोगान्तरायीभव-**
**त्कर्मक्लेशफलाशयप्रशमनोद्वेलामलस्रोतसम् ।**
**जन्तोः संसरतोऽर्चिरादिसरणिव्यासङ्गभङ्गाय या**
**लोकेऽस्मिन् विरजेव वेल्लितजला श्रीरङ्गमालिङ्गति ॥ २० ॥**

अब्धिप्रस्तावः कृतः पूर्वश्लोके । हरिगुणसागरे मज्जनं च प्रस्तुतम् । ब्रह्मगुणाब्ध्यवगाहः परमपुरुषार्थः । अत्र ब्रह्म च विवर्णयिषितो भूलोकवैकुण्ठनाथः श्रीरङ्गराजः । कावेरीमध्यद्वीपमध्यस्थत्वात् तत्प्राप्तिः कावेरीप्रवेशतत्तरणं विना न सिद्ध्येत् कुतश्चिदपि दिशः । 'एष ब्रह्म प्रविष्टोऽस्मि' इति वर्णितशीतब्रह्मावगाहप्रयोजकः कावेर्यवगाहः । स्वतः शीतत्वे तदर्थत्वादपि शीततामनुभवामः । ब्रह्मावगाहसिद्ध्यर्थं तदङ्गं कावेर्यवगाहनं करिष्य इत्यनुभव इव । अस्य वैकुण्ठस्येयं विरजा ॥

कावेरीम् । अब्धिमज्जनमुक्तम् । इदानीं तत्पत्नीभूतनदीमज्जनमुच्यते । 'कावेरी च महाभागा—' इति ऋषिपठितप्रसिद्धनाम्नो गच्छन्दोपनिबद्धपठनम् । जानकी, वैदेही; जनकात्मजातिवत्पितृपुत्रीत्वद्योतकं नाम ॥

अवगाहिषीय । 'अवगाह्यार्णवं स्वप्स्ये' इति सीताविरहदवानलतप्तो राघवः । तापत्रयतप्तानां शीतावगाहनमनोरथः सहजः । शीततरावगाहान्तरसाधकोऽयमवगाहः । ब्रह्मावगाहादनुमज्जनम् । कावेर्यवगाहा-

त्तून्मज्जनमस्ति ब्रह्मावगाहसम्भवाय । ब्रह्मणि निमज्य तु नेतरत्र मज्जनमुचितम् । 'अनावृत्तिः शब्दात्' इत्यनुन्मज्जनबोधकशब्दावृत्तिः ॥

**भगवद्भोगान्तरायीभवत्कर्मक्लेशफलाशयप्रशमनोद्वेलामलस्रोतसम्** । विरजातौल्यं संपाद्यते कावेर्याः । 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति योगसूत्रम् । ईश्वरेण भोगे परमसाम्यं मुक्तौ । अपहतपाप्मत्वादिगुणाष्टकवत्त्वं च सममीश्वरेण । क्लेशकर्मविपाकाशयाः संसारिणः । तेभ्यो मुक्तोऽसंसारी । तद्विमोकश्च विरजास्नानेन । तल्लभ्यतेऽत्रैव श्रीरङ्गाश्लेष्टकावेरीस्नानेन । 'अविद्यादयः क्लेशाः । क्लिश्नन्ति खल्वमी पुरुषं सांसारिकविविधदुःखप्रहारेणेति । कुशलाकुशलानीति धर्माधर्मास्तेषां च कर्मजत्वादुपचारात्कर्मत्वम् । विपाका जात्यायुर्भोगाः । विपाकानुगुणा वासनाश्चित्तभूमावाशेरत इत्याशयाः । 'इति व्यासभाष्ये । अस्मिन् श्लोके कर्मणः प्रथमनिर्देशः 'कर्माविद्यादिचक्रे—' इत्यत्रेव । फलशब्दो विपाकपर्यायः । संसारिण एतैः मुक्तेश्वरेभ्यो विभज्यन्ते । भगवद्भोगरूपब्रह्मानन्दस्यैतेऽन्तरायाः । 'व्याधिप्रभृतयोऽन्तरायाः' इति योगसूत्रम् । ते चैतज्जन्याः । भोगशब्देन भोगविभूतिप्रत्यभिज्ञापनमिव । एते कर्मक्लेशादयोऽन्तरायाः प्रत्यक्प्रवणधीसन्ततिस्रोतसा प्रशमभीयुः । तच्च धीस्रोतोऽमलं स्यात् । कावेर्या अमलस्रोतोभिरेते निःशेषं क्षाल्यन्ते यद्यप्यस्माकममलधीसन्ततिर्नास्ति । यथा कावेरीस्रोत उद्वेलं प्रवहति सह्यपर्वतेऽधिकवर्षात्तदा तदत्यन्तनिर्मलमिति प्रसिद्धम् ।

जन्तोः । जनिमतः । जन्मैवास्य बाधकम् ।

संसरणे । गतागतेषु । यातायाते ।

**अर्चिरादिसरणिव्यासङ्गभङ्गाय** । गतिचिन्तनमावश्यकं मुमुक्षूणाम् । अर्चिरादिमार्गविषयधीसन्ततिरावश्यकी । धिया तद्व्यासङ्गः कार्यः । तद्व्यासङ्गश्रमे ऽनादरयको भवति विरजातुल्यकावेरीस्नानेन । अस्माकं विर-

जानदीघटिताचिरादिगतिध्याननिर्बन्धापनुत्तये ।

या । 'स आगच्छति विरजां (विजरां) नदीम् । तां मनसात्येति' इति कौषीतकी । तामिति तत्र विरजानिर्देशः । तदनुस्त्रियत इव येतिसर्वनाम्ना ।

लोकेऽस्मिन् । अनित्येऽसुखेऽस्मिँल्लोके । भूलोके इयं विरजा ।

विरजेव । नदी चेद्रजोभूयिष्ठा स्यात् । तत्परिहर्तुं तदपवादेन विरजेति नाम्ना रजोनिषेधः ।

वेल्लितजला । वेल्लितेति कम्पवत्त्वं सूच्यते । आलिङ्गने कम्पः सात्विकभावः ।

श्रीरङ्गमालिङ्गति । भगवदधिष्ठितं क्षेत्रमालिङ्गति । भगवन्तं नालिङ्गति; सागरपत्नीत्वात् । भगवतश्च स्वजामातृत्वात् । नद्या भगवद्विग्रहालिङ्गनस्यानौचित्याच्च । उत्तररङ्गक्षेत्रे तदालिङ्गनजनितानर्थः सुविदितः । इयं भूलोकवैकुण्ठविरजा समन्तादाश्लिष्यति श्रीरङ्गम् । सानुरागालिङ्गननिमित्तं चोच्यतेऽनन्तरश्लोके । जामातृगृहम्, पुत्रीगृहम् ॥

दुग्धाब्धिर्जनको जनन्यहमियं श्रीरेव पुत्री वरः
श्रीरङ्गेश्वर एतदर्हमिह किं कुर्यामितीवाकुला ।
चञ्चच्चामरचन्द्रचन्दनमहामाणिक्यमुक्तोत्करान्
कावेरी लहरीकरैर्विदधती पर्येति सा सेव्यताम् ॥ २१ ॥

कवेरस्यात्मजेति कावेरीनामग्रहणम् । तस्या आत्मजा लक्ष्मीः, जामाता विष्णुरित्युच्यते । जामातृगृहमायाता श्वश्रूः पुत्रीजामातृविभवानुरूपं स्वविभवानुरूपं महार्घाणि लोकोत्तरद्रव्याणि स्ववीचीकरैरुपहरतीत्युच्यते ।

दुग्धाब्धिर्जनकः । सागरपत्नी कावेरी । दुग्धसागरसुता लक्ष्मीः । कल्पवृक्षकामधेन्वादिजनको दुग्धाब्धिः । अस्याः पितुर्लोकोत्तरैश्वर्यम् ।

।पितृकीर्तनं देयस्त्रीधनाधिक्याय ।

**जनन्यहम्** । हेमापगा, कनकसरित्खल्वहमित्यहंशब्देन द्योत्यते । मज्जलौघैर्मत्तीरस्थकेदाराः, तत्स्वामिनश्च धान्यादिसमृद्धिमन्तः क्रियन्ते । अहमाढ्यतमा ।

**इयं श्रीरेव पुत्री** । इयं स्वत एवानन्याधीनसर्वैश्वर्यवती । पुत्रीति ममाभिमतिविषयभूता । श्रीरेवेयम् । एतदधीना सर्वेषां मम च श्रीः । नेयं ' यथा श्रीः' इत्युपमानपदेन निर्देश्या । अशेषविभववतामियं सदोपमानम् ।

**वरः श्रीरङ्गेश्वरः** । वरोऽयं वरः । अस्यावराः सर्वेऽपि । पुरुषोत्तमोऽयं वरः । 'देवतानां विष्णुः परमः' । 'नाविष्णुः पृथिवीपतिः' इति राजानः सर्वेऽप्येतत्तेजोंऽशसंभवत्वादेव राजानो भवन्ति । जामाता विष्णुवत्पूज्य इति न्यायः । अविष्णुरपि जामाता विष्णुवत्पूज्यः । पूज्येष्वधिकतमो विष्णुः । अयं जामाता विष्णुरेव । विष्णुत्वे सति जामातृत्वेनायं निरतिशयपूज्यो भवति ॥

**एतदर्हमिह किं कुर्यामितीवाकुला** । एतच्छब्देन पूर्वोक्तसर्वपरामर्शः । न वरमात्रस्य । पूर्वोक्तलोकोत्तरहर्षनिमित्तसत्त्वेऽप्याकुलता भवत्यनुरूपविभवोपहारान्वेषणविषये ॥

**चञ्चच्चामरचन्द्रचन्दनमहामाणिक्यमुक्तोत्करैः कावेरी** । कावेरीति कवेरराजपुत्रीत्वोक्तिः सह्यपर्वतात्पितृगृहादानीतचामरचन्दनादिविभववत्त्वप्रदर्शनाय । जामात्रे राज्ञे चामरोपहारो न्याय्यः । श्रीरङ्गचन्द्रमसे चन्द्रोपहारो न्याय्यः । चन्द्रः कर्पूरः । हरिचन्दन इति हरिनामाङ्कितचन्दनः । हरये जामात्रे हरिचन्दनोपहार उचितः । महामाणिक्यानि सह्यात् प्रवाहागतानि । मुक्ताश्च पर्वतस्थतीरस्थवंशेभ्यो मुक्ताः । चामरचन्दनादयः प्रवाहानीताः । एते उत्क्षिप्य स्वकरैरुत्कीर्यन्ते ॥

**लहरीकरैः** । ऊर्मिभुजैः । उपहारदातारः करा अपि नवनवाः,

यथोपाह्रियमाणचामरादिद्रव्याणि नवनवानि । अङ्कुतेयं श्वश्रूः ॥

विदधती । एको बहूनां विदधाति कामान् जामाता । तस्मा एषा बहून् कामान् विदधातीति व्यज्यते ॥

पर्येति । भूलोकपरमपदे इयं क्रीडति रमते 'स तत्र पर्येति जक्षत्क्रीडन् रममाणः' इतिवत् ॥

सा । 'स तत्र पर्येतीति' श्रुतिः प्रत्यभिज्ञाप्यते सेति । तिष्ठतु श्रीरङ्गराजसेवा । प्रथमं तद्गुरुजनोऽयं सेव्यताम् । अवगाह्यतां तत्तीर्थम् ॥

**तीर्थं शुन्धति पाति नन्दनतरून् रथ्याङ्गणान्युक्षति**
**स्नानीयार्हणपानवारि वहति स्नातः पुनीते जनान् ।**
**श्यामं वेदरहो व्यनक्ति पुलिने फेनैर्हसन्तीव तत्**
**गङ्गां विष्णुपदीत्वमात्रमुखरां हेमापगा हन्त्वघम् ॥ २२ ॥**

श्वश्रूरियं पुत्र्या गृहे शाश्वतमवस्थाय सततं परिचारिकेव सर्वैः प्रकारैः परिचरन्त्यास्ते । अत्रत्यकूपतडागादितीर्थानि कावेरीजलैः शुध्यन्ति । कावेरीसामीप्यं विना नात्रत्यतीर्थानां शुद्धता स्यात् । चन्द्रपुष्करिण्यादिपुण्यतीर्थानि च कावेरीजलेन पूर्यन्ते ; शोध्यन्ते च । तीर्थीकुर्वन्ति तीर्थानि कावेर्यापः ॥

**पाति नन्दनतरून्** । नन्दनवनवृक्षान् यथा गङ्गा पाययति , तथेयं श्रीरङ्गद्वीपवनस्थवृक्षान् पाययित्वा पाति । नन्दनतरुवदभिमानः कावेर्याः स्वतीरस्थतरुषु । जामातृगृहस्था वृक्षास्तथा पाल्यन्ते ॥

**रथ्याङ्गणान्युक्षति** । अस्या राजधान्या राजमार्गाः कावेरीप्रवाहजलैः स्वयमेव वा पवनाहृतैर्वा सिच्यन्ते विरजीकरणाय ॥

**पानीयार्हणवारि वहति** । भगवदभिषेकार्थम् , भगवन्निवेदनार्थं च स्वच्छमधुरं वारि वहति । क्षारं जलं न पानीयोपयुक्तम् स्यात् । कावेर्या आपः सर्वोपयुक्ताः । वहतीति किङ्करभावो द्योत्यते ॥

**स्नातः पुनीते जनान्** । जामातृसेवार्थं नानादिग्भ्य आगतान्

स्नातः सर्वान् जनान्पवित्रयति। आत्मनेपदेन स्वस्या अपि स्नातृमहाजनैः पवित्रीकरणफलं सूच्यते 'तीर्थीकुर्वन्ति तीर्थानि' इति प्रमाणानुरोधात्।

**श्यामं वेदरहो व्यनक्ति पुलिने।** मरकतश्यामं कुवलयदलश्यामं वेदैश्च सर्वैरेकवेद्यं गूढतमं वस्तु स्वपुलिने स्वमध्ये सर्वदृश्यतया प्रदर्शयति। श्याममिति वेदरहस्यभूतप्रपत्त्युपायो व्यावर्त्यते। 'सर्वगुह्यतमं भूयः—' इति शरणागते रहस्यतमत्वम्; 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति वेदप्रतिपाद्यत्वं च। सागरपुलिने व्यञ्जितं तद्रहस्यं श्यामेन भगवता। उपेयभूतं श्यामं रह इदम्।

तत्। परोक्षभूतमतीन्द्रियं वेदरहः॥

**फेनैर्हसन्तीव गङ्गां विष्णुपदीत्वमात्रमुखराम्।** गङ्गा विष्णुपदोद्भवमात्रत्वेन स्वमहिमानमुच्चैरुद्घोषयति प्रवाहशब्दैः। विष्णुमेव कृत्स्नं व्यनक्तीयम्; न तत्पदमात्रम्। फेनैस्तां हसतीव। नोच्चैर्हसति दन्तमात्रमीषत्प्रकाशयति मन्दहासेन।

**हेमापगा अघं हन्तु।** अघमर्षिण्य आपः॥

> **अगणितगुणावद्यं सर्वं स्थिरत्रसमप्रति-**
> **क्रियमपि पयःपूरैराप्याययन्त्यनुजाग्रती।**
> **प्रवहति जगद्धात्री भूत्वेव रङ्गपतेर्दया-**
> **शिशिरमधुराऽगाधा सा नः पुनातु मरुद्वृधा॥ २३॥**

विष्णुपदीत्वमात्रं गङ्गाया इत्युक्तम्। इयं कावेरी तु भगवद्दयाप्रवाह इव। दया च हृदयोद्भवा। तस्मादप्यस्या उत्कर्ष इत्युच्यते। दया दयनीयगुणदोषान्न गणयति। स्नातृजनगुणदोषं न गणयति कावेरी। स्थावरजङ्गमप्राणिजातं पाति दया। इयमपि तथा। पाति नन्दनतरून् स्थावरान्; पुनीते स्नातो जनाञ्जङ्गमान्। उभे अपि शिशिरमधुरागाधे।

अगणितगुणावद्यम् । 'दोषो यद्यपि तस्य स्यात्' इति भगवदुक्तिः । तस्य प्रत्यभिज्ञापनम् ॥

सर्वं स्थिरत्रसमप्रतिक्रियमपि । 'शरीरजैः पापैर्याति स्थावरतां नरः' इति पापिष्ठां स्थिरयोनिं प्राप्तान्; जङ्गमांश्च । अप्रतिक्रियं दुष्परिहरपापवन्तम् । अप्रतिक्रियमाप्याययन्तीति क्रियाविशेषणं वा । अपेक्षन्तां वा मा वा, बलात् तानाप्लावयन्ती ॥

पयःपूरैः । प्रभूतैर्दयास्रोतोभिः ॥

आप्याययन्त्यनुजाग्रती । प्राणिशोकमनु जागरणम् । यद्यपि भगवान् स्वप्यात् तद्दया सदा जागरूकास्ति । शोचन्तमनुजाग्रती सा । यथा कावेरीप्रवाहो न स्वप्यात् तथा शेषशायिनो दयाप्रवाहो न स्वप्यात् ।

प्रवहति जगद्धात्री भूत्वेव रङ्गपतेर्दया शिशिरमधुरागाधा । कावेरीप्रवाहस्य दयाप्रवाहस्य च भूयः साम्यम् । नदीप्रवाहः केदारपोषणद्वारा जगद्धारकः । भगवद्दयां विना न जगद्ध्रियेत ॥

सा नः पुनातु मरुद्वृधा । पवित्रीकरणप्रार्थनायां वेदप्रसिद्धनामग्रहणं मरुद्वृधेति । न दयां विना पापनिर्हरणम् । 'अगणिततनुपातम्' इत्यगणितपदप्रयोगो गङ्गावर्णने उत्तररामचरिते । अगणितपदेनात्र श्लोकोपक्रमः ॥

तरळतनुतरङ्गैर्मन्दमान्दोल्यमान-
स्वतटविटपिराजीमञ्जरीसुप्तभृङ्गा ।
क्षिपतु कनकनाम्नी निम्नगा नारिकेल-
क्रमुकजमकरन्दैर्मांसलापा मदंहः ॥ २४ ॥

कावेरी जागर्तीत्युक्तम् । तत्तटविटपिमञ्जरीस्थभृङ्गाः स्वपन्तीत्युच्यते । कावेरीतरङ्गाणां तनुत्वमन्दत्वादिस्वभावश्च वर्ण्यते । जामातृक्षेत्रस्थभृङ्गानां डोलान्दोलनमारच्यते कावेर्या ॥

**तरलतनुतरंगैः** । तरङ्गाणां तरलत्वम् ; तनुत्वं च मन्दान्दोलनप्रयोजकम् ॥

**मन्दमान्दोल्यमानस्वतटविटपिराजीमञ्जरीसुप्तभृंगा** । यद्यपि श्रीरङ्गराजस्य डोलां न निर्वर्तयति कावेरी ; तथाऽपि तत्क्षेत्रवर्तिभृङ्गानामान्दोलिकां रचयति । तांश्च स्वापयति । मञ्जरीषु स्थिता भृङ्गा तरङ्गैर्मन्दमान्दोलनेन सुषुप्सन्ति ; स्वपन्ति च । पूर्वमसुप्ता आन्दोलनेन स्वपन्ति । सुप्तानां स्वापो न विहन्यते । आन्दोलनस्यातिमन्दत्वात् ॥

**कनकनाम्नी निम्नगा** । कनकं न निम्नगामि निम्नप्राप्यं न भवेत् । उच्चगमेव तत् । कनकसरित्त्वेऽपीयं निम्नगा ; निम्नजनसुलभा । निम्नकेदारसुलभा । कावेरीतीरे नारिकेलबाहुल्यं प्रसिद्धम् । 'कावेरीणालिएरीतरलणनिउणा णम्मदा णम्मआरा कन्दप्पोद्दीपणेण्णं गहिदनिहरणा दाहिण एन्ति तासाम्' इति बिल्हणविरचिते कर्णसुन्दरीनाटके तत्प्रसिद्धिर्दृश्यते ॥

**नारिकेलक्रमुकजमकरन्दैर्मांसलापा** । इयं निम्नगा अत्युच्चैर्नारिकेलक्रमुकवृक्षैर्मकरन्दनिष्यन्दैराराध्यते । 'स्वकुसुमैरर्चन्ति गोदावरीम्' इति भवभूतिः ॥

**मदंहः क्षिपतु** । निम्नगेयं निम्नस्य मम पापं निर्हरतु ॥

कदलबकुलजम्बूपूगमाकन्दकण्ठ-
द्वयससरसनीरामन्तरा सह्यकन्याम् ।
प्रबलजलपिपासालम्बमानाम्बुदौघ-
भ्रमकरतरुबृन्दं वन्द्यतामन्तरीपम् ॥ २५ ॥

कावेर्यवगाहः ; तद्गुणावगाहश्च वृत्तः । इदानीं तन्मध्यस्थो भगवदधिष्ठितो द्वीपो नमस्क्रियते । निम्नगा कावेरीत्युक्तम् । तीरवृक्षानसौ प्रवाहकाले सरससलिलैराकण्ठं पूरयतीत्युच्यते । मेघेन भगवताऽधिष्ठिते क्षेत्रे

घनीभूतवृक्षकदम्बकानि मेघमाला भासयन्तीव ॥

**कदलवकुल ... सरसनीराम्** । निर्दिष्टानां वृक्षाणां कण्ठद्वयसजलमस्ति प्रवाहकाले । आकण्ठमग्ना इमे वृक्षाः । नारिकेलक्रमुका बालवृक्षाः , नेमे वृद्धवृक्षाः । कण्ठद्वयसजलेऽवगाहनं सुभगम् । सरसनीरामिति कावेरीजलस्थवृक्षवर्धकत्वम् , तत्पुष्टिकरत्वं च द्योतयति ॥

**सह्यकन्याम्** । इयं सह्यजा वृक्षाणां सहजेव ॥

**अन्तरा अन्तरीपम्** । नेदं सिंहलादिवत्सागरमन्तरा द्वीपम् । किं तु नदीमन्तरा । कृष्णागोदावरीनदीमध्यवर्तिनां द्वीपानां लङ्केति नाम ।

**प्रबलजलपिपासालम्बमानाम्बुदौघभ्रमकरतरुवृन्दम्** । अत्यन्ततृषितत्वादाकण्ठमपिबन्निव मेघाः । आकण्ठवारिभरत्वान्मन्थरीभूता न व्योम गन्तुं प्रभवन्ति । आकण्ठमग्नवृक्षवृन्दमाकण्ठवारिभरमेघवृन्दसदृशम् । एते वृक्षाः तृषाशमनार्थमागता मेघा इव ॥

**वन्द्यताम्** । सूरिवृन्दवन्नमस्कार्यमिदं तरुवृन्दम् ; तद्विशिष्टमन्तरीपं च । समुद्रान्तरीपवासी विभीषणो रङ्गराजस्य कावेरीद्वीपवासं भोग्यं मेने ॥

**यद्विष्णोः परमतमः परोरजोग्र्यं**
**मुक्तानामनुविरजं विदीप्रमाहुः ।**
**तत्पुण्यं पुलिनमिदं तयाऽद्य मध्ये-**
**कावेरि स्फुरति तदीक्षिषीय नित्यम् ॥ २६ ॥**

अम्बुदौघभ्रमकरतरुवृन्दमन्तरीपमित्युक्तम् । निःशेषाविद्यानिवृत्तिस्थलं परमपदमिति श्रूयते । अत्र भ्रमबुद्धिः कथमित्याक्षिप्ते उच्यते —कविचतुरोक्तिरियम् । परमार्थेन न गृह्यतां कवेः रूपणवचः । श्रीवैकुण्ठाभिन्नमिदं द्वीपम् । परमपदवर्णनं क्रियते तदभिन्नस्यास्य द्वीपस्य प्रशस्त्यै । तदभेदतां द्रूप्यं च ॥

यत् । 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति श्रौतपुरोवादप्रसिद्धिमनुसृत्यात्र यच्छब्दोपनिबद्धः प्रसिद्धवदनुवादः ॥

**विष्णोः परमं पदम्** । न 'राहोः शिरः' इतिवदगतिकाभेदषष्ठ्याश्रयणम् ॥

**अतमः** । 'तमसः परस्तात्' 'तमसस्तु पारे' ॥

**परोरजः** । अतम इति नञः पर्युदासशक्त्या रजसः प्राप्तिः स्यात् । तद्व्यावर्त्यते । तम इति रजसोऽप्युपलक्षणमिति स्पष्टीक्रियते श्रुत्यर्थः ॥

**अग्र्यम्** । न ह्येतस्मात् परमुत्कृष्टमुच्चस्थानमस्ति ॥

**अनुविरजम्** । तमसः पारे इत्युक्तम् । तथा च रजस्तमस्सम्बन्धः स्यात् तत्पारवर्तित्वात् । तद्व्यावर्त्यते मध्ये विरजानदीसत्त्वस्फोरणेन । रजस्तमसोः शुद्धसत्त्वस्य च मध्ये विरजा आस्ते । तस्मान्न रजस्तमःसम्बन्धः । विरजातीरे वर्तते । न साक्षाद्रजस्तमसोः पारे ॥

**मुक्तानां विदीप्रम्** । 'अत्यर्कानलदीप्तम्' स्वयंप्रकाशम् ।

**आहुः** । आम्नाया आम्नायवृद्धाश्च ॥

**तत्पुण्यं पुलिनम्** । पुण्यमिति भोग्यत्वोक्तिः ; न पुण्यसाध्यत्वम् । पुण्यापुण्यातीतत्वात् । सुकृतरूपपुण्यस्यापि पाप्मशब्दनिर्दिष्टत्वात् ॥

**मध्येकावेरि** । नानुकावेरि, यथाऽनुविरजम् ; किं तु कावेरीमध्ये ॥

**इदंतया स्फुरति** । मांसचक्षुषापि पुरोवर्तित्वेन घटपटादिवद्वीक्ष्यं भवति ॥

**तदीक्षिषीय नित्यम्** । 'सदा पश्यन्ति सूरयः' इतिवदहमेतन्नित्यं पश्येयम् ॥

**त्वय्यन्तप्रहतिमतीषु वैष्णवानां**
**प्राप्यासु प्रचुरभवश्रमापहासु ।**

**कावेरीपरिचरितासु पावनीषु**
**श्रीरङ्गोपवनतटीषु वर्तिषीय ॥ २७ ॥**

परमपदं चेत् तत्र 'अहमन्नमहमन्नम्' इत्यादि सामोच्चैस्त्यर्निर्मुक्तैर्जेगीयेत । अत्र सामभूतास्त्रय्यन्ताः किं गीयन्त इति पृष्टे उच्यते—न केवलं त्रिवेदीसामानि ; द्रामिडब्रह्मसंहितासामानि च सततं जेगीयन्ते ॥

**त्रय्यन्तप्रहतिमतीषु** । अत्र दिशः पूरिताः संस्कृतद्राविडसामगानैः । प्रहतिशब्देन सामसंहितायाः पौनःपुन्येनाविच्छिन्नमुच्चैराम्रेडनं द्योत्यते । दुन्दुभिप्रहतिवदत्र सामप्रहतिः । 'उच्चैः साम्ना' इति खलु विधिः । मतुपा प्रहतेर्नित्यत्वं द्योत्यते ; प्राशस्त्यं च ॥

**वैष्णवानां प्राप्यासु** । नेमाः स्थल्यः प्रापिका उपायभूताः । प्राप्या इमाः । वैष्णवानामिति शठकोपादिवैष्णवमुनिसार्वभौमाभिमतिर्द्योत्यते । वैष्णवदर्शनस्थापकानां मतमनुसृत्य परमं प्राप्यं भुवि । परमपदादप्यस्य रस्यत्वं जोघुष्यते ॥

**प्रचुरभवश्रमापहासु** । प्रचुरशब्देन प्रायेण संसारश्रमनिवृत्तिर्द्योत्यते । प्राचुर्येण प्रायेण संसारतापनिवर्तिकासु । यद्वा प्रचुरः प्रभूतः । प्रभूतो भवश्रमस्तन्निवर्तिकासु ॥

**कावेरीपरिचारितासु** । का दिव्यस्त्री मालाहस्ता परिचरत्यपहतभवश्रमानत्र ; यथा परमपदे 'शतं मालाहस्ता दिव्यस्त्रियः' इति पृष्टे उच्यते—कावेर्यापरिचरितास्विति । परिचारविषयश्चोक्ता बहुभिः श्लोकैः । पुण्यनद्यः श्रीरामभद्रं 'वीचीवातैः शीकरक्षोदशीतैः' इति पर्यचरन् दण्डके । ष्विति भवभूतिः । 'यमुना च विचित्रं परिचचार यामुनम्' इति श्रीशुकः - तथा कावेरी परिचरति भगवन्तम् ; भागवतांश्च ॥

**पावनीषु** । न सुखजनकत्वमात्रेणोपादेयाः । परिशुद्धाः प्रदेशाः । एतद्विषयवास एव पापहरः ॥

**श्रीरङ्गोपवनतटीषु** । कुतः पावनत्वमिति चेत्—श्रीरङ्गविमान-समीपवर्तित्वादमीषामुपवनप्रदेशानाम् । उपवनमिति न वृन्दावनवन्महा-वनत्वम् । श्रीरङ्गमिति प्रणवश्चाभिप्रेतः । प्रणवसन्निकर्षात् पावनत्वम् । त्वय्यन्त इति श्लोकोपक्रमः । श्रीरङ्गकीर्तनेनोपसंहारः । त्वय्याः पूर्वं परस्ता-च्च ओङ्कारः पठनीयः । त्वय्या उभयोरन्तयोर्नियमेन दृष्ट ओङ्कारस्त्वय्यन्तः । उपक्रमस्थत्वय्यन्तशब्देनोङ्कारोऽपि गृह्येत । तेन चादावन्ते च ओङ्कारः स्यात् । तेन चोङ्कारव्याप्तत्वं श्रीरङ्गोपवनतटीनाम् । उच्चैरुद्घोष्यते मिलि-तैरध्येतृभिरोङ्कार आदावन्ते च । ओङ्कारप्रहत्या पावनत्वम् । ओङ्का-राभिन्नरङ्गविमानसामीप्यात् पावनत्वम् ॥

**वर्तिषीय** । 'वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः' इति वेदान्ताचार्याः । नास्मात् स्थानात् स्थानान्तरमियाम् । आवर्तनविरोधी वर्तनशब्दः । नावृत्तिर्भवतु ॥

**स्फुरितशफरदीर्यन्नारिकेलीगुलुच्छ-**
**प्रसृमरमधुकुल्यावार्धितानोकहानि ।**
**रतिमविरति रङ्गारामरम्यस्थलानि**
**क्रमुकपनसमोचामेचकानि क्रियासुः ॥ २८ ॥**

**श्रीरङ्गमित्युक्तम्** । 'रतिं गतो यतस्तस्माद्रङ्गमित्यभिधीयते' इति भगवतो निरतिशयां रतिं गमयतीति रङ्गशब्दस्यार्षं निर्वचनम् । रज्यन्तेऽस्मिन् सर्वे सामाजिका इति रङ्गम् । तदध्यक्षीक्रियेत तत्स्थवृक्षमनुष्याणां रतिकरत्वप्रदर्शनेन । अत्यन्तहृष्टान् तरून् दृष्ट्वा द्रष्टॄणां हर्षो भवेत् ॥

**स्फुरित... ....अनोकहानि** । शफराः कनकवर्णा मत्स्याः । कनकसरिति तेषां प्राचुर्यम् । कनकसरित्सलिले ते स्वाभाविकहर्षेणोत्प-तन्ति । तदुद्वर्तने कनकस्येव स्फुरणम् । नालिकेरीवृक्षा न वृद्धोन्नत-वृक्षाः ; किं तु बालवृक्षाः । नारिकेलीस्तबका दीर्यन्ते शफरस्फुरणेन ।

अतिपेलवाः कोमला बालनारिकेलीस्तबकाः । दीर्यमाणस्तबकान्मधुधारा गलन्ति । तास्तीरवृक्षमूलान्यापूरयन्ति । मधुसेकेन तरवो वर्ध्यन्ते ॥

**क्रमुकपनसमोचामेचकानि** । यथा राजा तथा प्रजाः । यथा स मरकतशिलामेचकस्तथा तदुपवनवृक्षाः । क्षेत्रं मेचकितं भवत्यधिष्ठातृदैवतवत् । मोचाः कदलयः । 'श्यामायमानानि दिगन्तराणि' इतिवत् रङ्गप्रदेशाः श्यामायन्ते ॥

**रङ्गाराम रम्यस्थलानि** । नैतेषामुपवनप्रदेशानामेतैर्विचित्रहृष्टतरुभी रम्यत्वम् । श्रीरङ्गराजः स्वारामभूतेष्वेतेषु प्रदेशेषु स्वामित्वेनोत्सवमूर्तिरूपेण विहरत्युत्सवान् रचयन् । ततो रम्याण्येतानि स्थलानि । 'रम्याणि कामचाराणि' इति प्रमाणवचनप्रत्यभिज्ञापनं रम्येति । आरामो विहारः ॥

**अविरति** । अविच्छिन्नं यथा तथा । रतेर्विरतिर्माऽभूत् । आरामस्य विरामो मा भूत् ॥

**रतिं क्रियासुः** । रङ्गस्थलानि ममाविरतां रतिं विदधताम् । यथा रङ्गराजस्य रतिं करोति रङ्गं तथास्माकं रतिप्रदं भूयात् । यथा राज्ञे तथा प्रजाभ्यः ॥

**अधिपरमपदं पुरीमयोध्या-**<br>
**ममृतवृतामपराजितामुशन्ति ।**<br>
**पुलिनमुपरि रङ्गराजधानी**<br>
**पिशितदृशामपि सा पुरश्चकास्ते ॥ २९ ॥**

रतिरित्युक्तम् । इयं रतिः परमपदवासजन्या परमात्मरतिर्ब्रह्मानन्दः । अपराजिता अयोध्या पुरी सैवात्र मांसचक्षुर्विषयो भवति । उपवनप्रदेशात् पुरीप्रवेशः ॥

**अधिपरमपदम्** । परमपदोपरि ॥

**पुरीममृतवृताम्** । 'अमृतेनावृतां पुरीम्' ॥

**अयोध्यामपराजिताम्** । दोषैरयोध्याम् दोषैरपराजिताम् । यत्र रामः सायोध्या । यत्र रामदैवतं सायोध्या ॥

**उशन्ति** । अनपायिन्यो वेदवाचो यां पुरीं कामयन्ते । सेति तच्छब्दसामर्थ्याद्यच्छब्दोऽध्याहर्तव्यः ॥

**पुलिनमुपरि** । अधिशब्दस्थाने तत्समानार्थकोपरिशब्दः । कावेरीपुलिनोपरि । पार्श्वद्वयेऽपि नदीवत्त्वं परमपदस्य नास्ति । पुलिनतीरे आस्ते सा पुरी ; न पुलिनोपरि ॥

**पिशितदृशामपि** । 'न मांसचक्षुरभिवीक्षते तम्' इति ब्रह्मदर्शनस्याशक्यता । यदात्मको भगवांस्तदात्मिका भगवद्व्यक्तिरिति परमपदस्य मांसचक्षुर्ग्राह्यत्वाभावः । पिशिताशनेन्द्रप्रतिष्ठिता पुरी पिशितदृशां चकास्ते । अपिना परमपदवासिभिरप्यनुभाव्यता द्योत्यते ॥

**पुरश्चकास्ते** । अस्मत्पुरोवर्तिनी भूत्वा समीपे प्रकाशते ॥

**भवपदमपि दिव्यधाम कर्तुं**
**तदुभयतन्त्रितहर्म्यमालिकेव ।**
**भवनमणितलैर्विजृम्भमाणा**
**जयतितरामिह रङ्गराजधानी ॥ ३० ॥**

रङ्गक्षेत्रस्य परमपदत्वमुपपाद्यते । तत्सिद्धवत्कृत्योक्तं पूर्वश्लोके 'सायोध्यापुरी पुरश्चकास्ते' इति ॥

**इह** । संसारमण्डले ॥

**रङ्गराजधानी** । ब्रह्मानन्दरूपरतिगमयित्री दिव्या पुरी ॥

**जयतितराम्** । परमपदादप्यधिकोत्कर्षवती । तरप्परमपदापेक्षया ।

**भवपदमपि** । संसारमण्डलमपि ॥

**दिव्यधामकर्तुं** । परमपदं कर्तुम् ॥

**तदुभयतन्त्रितहर्म्यमालिकेव** । प्रकृतिमण्डलम् ; परमपदमित्युभयं तदुभयशब्देन गृह्यते । उभयपदसंबन्धप्रचुरता विद्यतेऽत्र हर्म्येषु ।

हर्म्याणां परमपदपर्यन्तौन्नत्यम् । तन्नितं संयुक्तं निबद्धम् ॥

**भवनमणितलैर्विजृम्भमाणा** । स्वच्छेषु भवनमणितलेषु स्वच्छशुद्धसत्त्वप्रतिबिम्बनमिव । मणितलेषूर्ध्वास्थितनभःप्रतिफलनम् । मणितलं स्वच्छं शुद्धसत्त्वसदृशम् । उपरिस्थितमणितलैरुपरिभागे शुद्धसत्त्वमयम् ।

**मणिमकररुचीर्वितत्य पाशा-**
**न्विसृमरकेतुकरैर्मृगं हिमांशोः ।**
**श्रिय इव नवकेलये जिघृक्षुः**
**सुखयति रङ्गपुरी चकासती नः ॥ ३१ ॥**

मणितलान्युक्तानि स्वच्छशुद्धसत्त्वसादृश्योपपादनाय । इदानीं मणिमकरकान्तयश्चान्द्रहरिणग्रहणार्थं वितताः पाशा इवेति रूप्यन्ते । रङ्गराजधानीत्युक्तम् । तत्र ध्वजादिकं प्रदर्शनीयम् । ध्वजाश्च चन्द्रमण्डलं स्पृशन्ति ॥

**मणिमकररुचीर्वितत्य पाशान्** । रत्नमकरिका अलंकुर्वन्ति ध्वजस्तम्भम् । मन्मथमन्मथस्य नगरीयम् । युक्तमत्र मकरालंकृतध्वजस्तम्भस्थापनम् । रत्नमकरकान्तयः स्वलग्नमकरविशिष्टपाशसादृश्यं वहन्ति । ध्वजाः करा इव भवन्ति । करधृतपाशा इव भवन्ति मणिमकररुचयः । करैः पाशान्वितत्य ॥

**विसृमरकेतुकरैः** । ध्वजकरैः ।

**हिमांशोर्मृगम्** । चान्द्रं मृगम् । 'चान्द्रं हरामि हरिणम्' इत्यादि स्मार्यते ॥

**श्रियो नवकेलये जिघृक्षुरिव चकासती** । राज्ञ्याः श्रीरङ्गनायक्या नवनवक्रीडाकौतुकाय ग्रहीतुमिच्छुरिव ॥

**नः सुखयति** । रङ्गपुर्या रङ्गनायकीपिप्रीषा । वयं प्रीयामहे । शेषिप्रीतिरस्मत्प्रीतिः ॥

**जनपदसरिदन्तरीपपुण्य-**
**त्पुरपरिपालननित्यजागरूकान् ।**

प्रहरणपरिवारवाहनाढ्यान्
कुमुदमुखान्गणनायकान्नमामि ॥ ३२ ॥

राजधान्या अङ्गेषु हर्म्यमाला; ध्वजाश्चोक्ताः । इदानीं नगरपालका गणनायका उच्यन्ते । क्षेत्रनायको रङ्गराजः शेते । गणनायकाः पुरपालकाः सततं जाग्रति ॥

**जनपदसरिदन्तरीपपुष्यत्पुरपरिपालननित्यजागरूकान्** । 'कोसलो नाम मुदितः स्फीतो जनपदो महान् । निविष्टः सरयूतीरे धनधान्यसमृद्धिमान् ॥' इतिवदस्य जनपदस्य सारवत्त्वम् । कनकसरित्तीरवर्तित्वात् भूयसी धनधान्यसंपत् । संपत्प्रकर्षं सततं जागरूकाः पालयन्ति ॥

**प्रहरणपरिवारवाहनाढ्यान्** । पालकानामायुधानि, भटाः; वाहनानि च भूरि भूयः सन्ति ॥

**कुमुदमुखान् गणनायकान्नमामि** । यथा सेनापतिः कुमुदो वानरनायको रामदासस्तथेमे कुमुदादयो नायकाः ॥

**अहृतसहजदास्याः सूरयः स्वस्तबन्धा
विमलचरमदेहा इत्यमी रङ्गधाम ।
सहितमनुजतिर्यक्स्थावरत्वाः श्रयन्ते
सुनियतमिति येऽस्य प्राङ्गुरेभ्यो नमस्तात् ॥ ३३ ॥**

आढ्या गणनायका इत्युक्तम् । किं तेभ्यो भूरिवेतनं दीयत इति पृष्टे उच्यते ।—नेमे भृतकग्राहिदासाः । एतेऽशुल्कदासाः । स्वयं प्रयोजनं सहजमेषां दास्यम् । नेमे कुतश्चिद्दासकर्मणे आहूताः स्वयमागता एते ।

**अहृतसहजदास्याः** । स्वतो दासभूताः । स्वयंदास्यमुपागताः । कदाऽपि तेषां स्वरूपभूतं दास्यं नापहृतम् । एते नित्याः; नित्यदासाः ॥

**सूरयः** । दासाः पामराः स्युः । इमे पण्डिता विपश्चितः । नि-

त्या उच्यन्ते ।

**स्वस्तबन्धाः** । दासाश्चेन्नियमबद्धा अस्वतन्त्राः स्युः । 'स स्वराड्भवति' इत्यनन्याधिपतय इमे । स्वस्तबन्धाः मुक्ताः ।

**विमलचरमदेहाः** । मुमुक्षवः, येषामिदं जन्म चरमजन्म ; ये एतद्देहावसाने ।नियतं मोक्ष्यन्ते ।

**इत्यमी** । एते सर्वे नित्या मुक्ता मुमुक्षवश्च ।

**सहितमनुजतिर्यक्स्थावरत्वाः** । मनुजभावेन, तिर्यग्भावेन ; स्थावरभावेन चात्र मिलिताः ।

**रङ्गधाम श्रयन्ते सुनियतमिति** । एते निर्बन्धलेशं विना नियमेन स्वयं प्रीत्या रङ्गधामाश्रयन्ते ।

**इति येऽस्य प्राहुरेभ्यो नमस्तात्** । न केवलमेतान्नित्यसूर्यादीन्नमामि । नित्यसूर्यादयोऽत्र मनुजतिर्यक्स्थावरत्वेनावस्थाय परिचरन्तीति ये एतद्रहस्यं प्राचीकशंस्तानपि नमामि ।

**श्रीरङ्गदिव्यभवनं भुवि गोपुराणां**
**प्राकारितेन निकरेण गरुत्मतेव ।**
**पार्श्वप्रसारितपतत्रपुटेन**
**नानातनूभिरुपगूढमुपघ्नयाम ॥ ३४ ॥**

सूरयः स्थावरत्वेन श्रयन्त इत्युक्तम् । तदुपपाद्यते । अनन्तस्य शय्यात्वेनावस्थापनं प्रसिद्धमुपदेशं विनापि । गरुडो गोपुरप्राकारत्वेनावतिष्ठते इत्युच्यते ।

**श्रीरङ्गदिव्यभवनमुपघ्नयाम** । सूरयः श्रयन्ते रङ्गधाम । वयं तदाश्रयाम ॥

**भुवि गोपुराणां निकरेण प्राकारितेन** । गोपुरा गरुत्मन्त इव गोपुरोभयपार्श्ववर्तिप्राकारौ तत्पक्षाविव । गरुत्मानेव शरीरपरिग्रहेण गोपुरनिकरत्वेनावतिष्ठते । वेदात्मा गरुडः । प्रणवो रङ्गम् । वेदवेष्टितः प्रणवः । वेदशृङ्गं रङ्गम् ।

**पार्श्वप्रसारितपतत्रपुटेन गरुत्मतेव** । आलिङ्गने पक्षिणः पक्षौ प्रसारितौ भवेतामिति पक्षिस्वभावः प्रदर्श्यते ।

**नानातनूभिरुपगूढम्** । (श्रीरङ्गदिव्यभवनम्) 'स एकधा भवति द्विधा भवति त्रिधा भवति' इति नानातनुपरिग्रहः । '—गात्रैः शोकाभिकर्शितैः संस्पृशेयं सकामाहं—' इति शरीरबहुत्वमनोरथः सहजोऽभिमतवस्तुपरिष्वङ्गे । अनेकशरीराणि परिगृह्य गाढं परित उपश्लिष्टम् । गाढोपगूढम् । वेदात्मा सुपर्णो गरुत्मान् । श्रीरङ्गं च प्रणवः । प्रणवस्य वेदोपगूढत्वं न्याय्यम् । गरुत्मानुपगूहति रङ्गम् । गरुत्मदुपगूढं रङ्गं वयमुपध्नयाम वृक्षं लतेव । चिरप्रणिपातो द्योत्यते ; तत्र नित्यवासश्च ।

> **प्राकारमध्याजिरमण्टपोक्त्या**
> **सद्वीपरत्नाकररत्नशैला ।**
> **सर्वंसहा रङ्गविमानसेवां**
> **प्राप्तेव तन्मन्दिरमाविरस्ति ॥ ३९ ॥**

गरुत्मान् परमपदादागत्य रङ्गमुपगूहतीत्युक्तम् । अत्रैव स्थिता विश्वम्भरा भाग्यश्रेयसी प्राकारमध्याजिरमण्डपत्वेनावतिष्ठते रङ्गविमानसेवायै इत्युच्यते ।

**प्राकारमध्याजिरमण्डपोक्त्या सद्वीपरत्नाकररत्नशैला** । सप्तद्वीपा वसुमती सप्तार्णववती रत्नवती सशैला । अत्र प्राकाराः सप्त । प्राकारमध्याजिराणि सप्त । अजिरेषु शिलामण्टपाः । प्राकारा आवरणानीव । 'दशोत्तराण्यावरणानि यानि च' 'दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै' 'चतुर्दशभुवनावरणहेमकटाहरूपमण्डलम्' इत्यादिकमिह भाव्यम् । प्राकारा आवरणानि । प्राकारमध्याजिराणि रत्नाकराः सागरा इव । विचित्रशिलामण्डपा रत्नशैला इव । साजिराश्चतुर्दशावरणानि । श्रीरङ्गं च द्वीपमध्यस्थम् । तेन सद्वीपत्वं निरूपितं भवति । नदीसहितत्वं चास्ति । उक्त्या व्याजेन , नाम्ना ; अपदेशेन ।

**सर्वसहा** । रजस्तमः सम्बन्धम् , पापिष्ठजनवहनभारम् ; परमपदानुभवस्य स्वस्याः प्राप्तेऽपि तद्विश्लेषं च सोढुं समर्थैव । तथाऽपि यदा परमपदमतायातं तत्सेवां साभिलषेदेव ।

**रङ्गविमानसेवां प्राप्तेव** । रङ्गविमानस्य कायिकसेवां प्राप्तेव भाति सर्वसहा । रङ्गमन्दिरत्वेन प्रकाशते ।

> **जितबाह्यजिनादिमणिप्रतिमा**
> **अपि वैदिकयन्निव रङ्गपुरे ।**
> **मणिमण्डपवप्रगणान् विदधे**
> **परकालकविः प्रणमेमहि तान् ॥ ३६ ॥**

वेदात्मनो गरुडस्य रङ्गपरिचरणमुक्तम् । भूदेव्याश्च परिचरणमुक्तम् । परकालकविपरिचरणमुच्यते । परकालेति तन्नामान्वर्थीक्रियते तेन बाह्यान् परान् जिनादीन् वैदिकीकृत्य । गरुडः स्वयं गोपुरप्राकारादि बभूव । भूमिश्च द्वीपाजिरादि बभूव । परकालो मण्टपवप्रादीन् निर्ममे ।

**रङ्गपुरे** । ओङ्कारपुरे । ओङ्कारपुरत्वादवैदिका अप्यत्र वैदिका भवन्ति ।

**जितबाह्यजिनादिमणिप्रतिमा अपि** । बहवो जैनादिबाह्या जिताः परकालेन । तत्प्रतिमाः परकालनिर्मितमण्टपेषु निवेशिताः । जिनो जयशील इति तेषामुद्घोषः । जिनस्य जितत्वमित्याश्चर्यम् ।

**वैदिकयन्निव** । तेऽप्यूर्ध्वपुण्ड्रधारिणः शङ्खचक्रादिलाञ्छना दृश्यन्ते । तेऽपि वैदिकीभूता इव ।

**मणिमण्टपवप्रगणान् विदधे** । मणिमण्टपेषु मणिप्रतिमाः ।

**परकालकविः** । अन्वर्थं नाम ।

**प्रणमेमहि तान्** । वैदिकीभूतजिनादिप्रतिमापरामर्शः , तानिति परकालपरामर्शो वा ।

स्मेराननाक्षिकमलैर्नमतः पुनानान्
दंष्ट्रागदाभ्रुकुटिभिर्द्विषतो धुनानान् ।
चण्डप्रचण्डमुखतः प्रणमामि रङ्ग-
द्वारावलीषु चतसृष्वधिकारभाजः ॥ ३७ ॥

अवैदिका वैदिकीकृताः प्रणताः । इदानीं द्वारचतुष्टयस्था अधिकारिणः प्र-णम्यन्ते । चण्डप्रचण्डौ प्राग्द्वारे, याम्ये भद्रसुभद्रौ ; पश्चिमे जयविजयौ, उदीच्यां धातृविधातारौ ॥

**नमतः** । भगवत्प्रणन्तॄन् । प्रणामो भगवदुद्देश्यकः ; यद्यपि द्वाःस्थसमीपे प्रणम्यते ।

**स्मेराननाक्षिकमलैः** । स्मयमानमुखनेत्राम्बुजैः ॥

**पुनानान्** । अघपरिहरणं कुर्वन्तः ॥

**द्विषतः** । भगवद्द्विषः ।

**दंष्ट्रागदाभ्रुकुटिभिर्धुनानान्** । भीषणैर्दंष्ट्रादिभिर्भीषयन्तः । दंष्ट्रा-गदावत्ततोऽधिकं वा भीषणा भ्रुकुटयः ॥

**रङ्गद्वारावलीषु चतसृषु** । चतुर्षु गोपुरद्वारेषु ॥

**अधिकारभाजः** । अधिकारं प्रीत्या सेवमानाः ॥

**चण्डप्रचण्डमुखतः** । चण्डप्रचण्डादीन् । प्राग्द्वारे .... .... चण्डप्रचण्डौ । प्राग्द्वारेण प्रविष्टस्य तौ प्रथमदृष्टौ ।

**प्रणमामि** । एतान्नमामि ।

सर्वात्मसाधारणनाथगोष्ठी-
पूरेऽपि दुष्पूरमहावकाशम् ।
आस्थानमानन्दमयं सहस्र-
स्थूणादिनाम्ना तदवाप्नवानि ॥ ३८ ॥

प्राग्गोपुरद्वारा अन्तःप्रवेशे सहस्रस्थूणामण्टपो दृष्टिगोचरो भवति । नायं मण्टपस्थूणामयः ; किं त्वानन्दमयः । नाममात्रमस्य सहस्रस्थूणामण्टप

इति। शतगुणितोत्तरक्रमेणानन्दमयस्य निरवधिकानन्दवत्त्वं लक्षितं श्रुत्या। स्थूणामय इवायं मण्टपश्चर्मचक्षुषाम्। अत्र यद्यपि स्थूणाः सहस्रसंख्या-रूपपरिच्छेदवन्तः; नाथगोष्ठीदर्शनजन्यानन्दस्य संख्यातीतत्वम्; निरव-धिकत्वं च। स्थूणाविषये सहस्ररूपसंख्या। अत्राविर्भवदानन्दस्य सं-ख्यातीतत्वम्। सर्वात्मेत्यादि परमपदादप्यत्र यद्यपि गोष्ठी महत्तरा; नास्य मण्टपस्यावकाशः पूर्यते। परमपदापेक्षया अत्रत्यगोष्ठ्या महत्त्वेऽपि महत्तरोऽवकाशः। गोष्ठीमात्रं पूर्यते। मण्टपावकाशस्तु न पूर्यते; किंतु शिष्यते। 'पूर्णमेवावशिष्यते'। यथा भगवान् तथा तन्मण्टपः। 'अ-स्मिन्परमपदेऽयोध्यापराजिता पुरी, अपराजितमायतनम्; सहस्रस्थूणादि-परिकरं दिव्यस्थानरत्नम्, तत्र पर्यङ्के 'श्रिया सनाथः' इत्यनाद्यनन्तं मुक्त-भोग्यं छान्दोग्यतैत्तिरीयकौषीतकिप्रभृतिप्रसिद्धमनुसन्धेयम्' इति सहस्रनाम-भाष्यं। त्रिपाद्विभूतित्वेन प्रसिद्धमवकाशमहत्त्वेनाप्यतिशेतेऽयं मण्टपः। ना-थशब्देन 'यत्र देवानामधिदेव आस्ते' इति श्रुतिखण्डप्रत्यभिज्ञापनमिव।

**आस्थानमानन्दमयं सहस्रस्थूणादिनाम्ना।** यद्यपि नाम्ना स-हस्रस्थूणाख्यपरिच्छेदवानिव, वस्तुतोऽस्य संख्यातीतानन्दमयत्वम्। आ-नन्दमयशब्देन तत्प्रकरणप्रतिपादितासंख्येयत्वव्यञ्जनम्। चित्सभा नटरा-जस्य; आनन्दमयसभा श्रीरङ्गनटराजस्य। आनन्दमयस्य पुरुषस्यानन्दमय-मास्थानमनुरूपम्; यथा निर्लेपस्यासङ्गस्य पुरुषस्य तुल्यस्वभावमक्षि अनुरूपं स्थानमिति चारु प्रदर्शयति श्रुतिः—'यद्यप्यत्र सर्पिर्वोदकं वा सिञ्चति वर्त्म-नीह्येव गच्छति' इति। सहस्रस्थूणादिनाम्ना प्रसिद्धम्। लोकप्रसिद्धिमनु-सृत्य लोकबोधार्थं परिच्छेदापादकनामग्रहणम्; न वास्तवीं रीतिमनुसृत्येति भावः। मण्टपस्य महामणिमण्टप इति नामान्तरग्रहणमपि। आदिप-देन 'सहस्रस्थूणे विनिर्मिते दृढ उग्रे' इति श्रुत्युक्तेतरपदानां स्मारणं स्यात्।

**तत्।** परमपदमण्टपेनैतल्लक्ष्यं भवति। प्रसिद्धेन ज्ञातेनाप्रसिद्धस्य

बोधनं न्याय्यम् । परमपदमण्टपादप्यस्याधिकावकाशवत्त्वं लक्ष्यते । तस्य ज्ञातत्वमभ्युपगम्य तेनैतस्योपलक्षणं क्रियते । उपलक्षकं तत् उपलक्ष्यमिदम् । तेनात्र तदिति निर्देशः । अस्य मण्टपस्यानन्दमयत्वाकारो लक्ष्यते ।

**आप्नवानि** । 'ब्रह्मलोकमभिसंभवानि' इतिवन्मन्मनोरथः । अयं श्लोक उदाहृतः श्रीमद्वेदान्ताचार्यैः स्तोत्रभाष्ये ॥

**विहरति हरौ लक्ष्म्या लीलातपत्रपरिष्क्रिया-**
**विनिमयविधासूनासूनक्रियासफलोत्पलाम् ।**
**अथ मुनिमनःपद्मेष्वब्जासहायविहारज-**
**श्रमहरतटीं यामस्तामैन्दवीमरविन्दिनीम् ॥ ३९ ॥**

ब्रह्मसभाप्रवेश उक्तः ब्रह्मप्रवेशः शीतह्रदप्रवेश इव । शीतह्रदानुभवो बुद्धिस्थो भवति । नाथगोष्ठीत्युत्सवसमाप्तिर्द्योतिता । अवभृथस्नानं चन्द्रपुष्करिण्यां भवेत् । इयं पुष्करिणी न केवलं तापत्रयतप्तास्मच्छ्रमहरा ; किं तु सर्वतापातीतसमस्तजनतापहरशीततमदिव्यमिथुनस्यापि श्रमहरेति चारु प्रदर्श्यते । अस्यामुत्पलानि सन्ति । पुष्करिणीत्युक्त्यैव पद्मसद्भावो नियतः ॥

**अथ** । नाथगोष्ठ्यनुभवानन्तरम् ॥

**विहरति हरौ लक्ष्म्या** । उचितः पद्मिन्यां पद्मया सह विहारः । विहरतीति हरिरिति संज्ञेव । 'त्वत्संप्रीत्यै विहरति हरौ—' इति श्रीस्तुत्याम् । हरिरिति सर्वलोकतापहरशीतलत्वं द्योत्यते । 'रुक्मिणीं हरता हरे' इति रुक्मिणीहरणेन हरिसंज्ञेति व्यज्यत इव ॥

**लीलातपत्रपरिष्क्रियाविनिमयविधासूनाक्रियासफलोत्पलाम्** । लीलातपत्रं स्वयमेव रचयतः ; परिष्कुर्वतो वा । प्रथमं पद्ममनन्तरमुत्पलम् ; तदनन्तरं पद्ममिति पर्यायेण पुष्पविनिवेशो लीलातपत्रे लीलातपत्रस्य रचनमपि लीलया क्रियते । पद्मा पद्मानि, नीलो भगवान्नीलोत्पलानि च

च निवेशयति । अत्र सूनासूनिरूपस्पर्धा भवति । परिष्क्रियेति परस्परालंकरणमपि भवेत् । एवमुत्पलानां साफल्यम् ॥

**मुनिमनःपद्मेषु** । यथा क्रियाव्यतिहारेण पद्मोत्पलनिवेशनम् ; तथा पर्यायेण मुनिमनःपद्मेष्वैन्दवपद्मिन्यां च विहार इति द्योत्यते । पद्मया सह मनःपद्मेषु विहार उचितः ॥

**अब्जासहायविहारजश्रमहरतटीम्** । इच्छाविहारजन्यः श्रमः । न कर्मप्रयुक्तजननदवीयातायातजन्यः । हरेः श्रमहरतटी ॥

**यामः** । आम्नवानीति पूर्वश्लोके एकवचनम् । अत्र बहुवचनम् । गोष्ठीस्थाः सर्वे गच्छन्ति ।

**ऐन्दवीमरविन्दिनीम्** । 'कुमुदान्येव शशाङ्कः' इति चन्द्रसरस्युत्पलानां सद्भावो युक्तः स्यात् । पद्मान्यप्यत्र भवन्तीत्यद्भुतमिदम् । भगवत्सन्निधौ सहजविरोधिनां विरोधविश्रान्तिः । 'विरोधो विश्रान्तः' इति रामागमने लवचन्द्रकेतू ।

**तापत्रयीमैन्दवपुष्करिण्यां**
**निमज्य निर्वापयितास्मि यस्याः ।**
**अभ्याशतोऽपामघमर्षणीनां**
**चन्द्रः सुधादीधितितामवाप ॥ ४० ॥**

दिव्यमिथुनस्य विहरणश्रमहरणमत्र । मम तापत्रयापक्रान्तिः । मदघहरणं यथा चन्द्रस्य । ममामृतत्वप्राप्तिर्यथा चन्द्रस्यामृतांशुत्वम् । सभा उक्ता । अत्र पद्मिन्युच्यते । 'विमानानि सभास्तथा । आक्रीडा विविधा राजन् ! पद्मिन्यश्चामलोदकाः' इति सभापद्मिन्योः साहचर्यम् ; पौर्वापर्यक्रमश्च । गोष्ठ्यां नित्यमुक्ता अपि स्युः । सर्वेऽत्रागताः । तापत्रयं न नित्यमुक्तेषु संभवेत् । इतरेषां संसारिणां तापत्रयमस्तीति नास्माभिर्वक्तुं युक्तम् । स्वमात्रस्यात्र पृथक्कृत्यैकवचनेनोक्तिः । तटीं याम इत्युक्तं पूर्वश्लोके । गत्वा न तटस्थस्तिष्ठेयम् । किं तु तत्र मज्जेयमित्युच्यते ।

**ऐन्दवपुष्करिण्यां निमज्य** । अनन्तभवार्णवान्तर्मज्जनेन ताप-त्रयी भूयः सम्पादिता । इदानीमत्र निमज्य । निमज्येति स्तोत्ररत्नश्लोकप्र-त्यभिज्ञापनमिव ।

**तापत्रयीं निर्वापयितास्मि** । तापनिर्वापणेन परनिर्वाणप्राप्तिः ।

**यस्या अघमर्षणीनामपामभ्याशतः** । यस्या इति पौराणिक-प्रसिद्धिसूचनम् । अस्या अपामेवाघमर्षणीत्वादघमर्षणसूक्तजपापेक्षाऽपि न । अभ्याशतः सामीप्यमात्रात् । तटस्थत्वमात्रात् । न मज्जनेन । अनेन किमुत मज्जनेनेति द्योत्यते । अभ्यासत इति वा पाठः । पुनः पुनर्मज्जनेन ।

**चन्द्रः सुधादीधितितामवाप** । अमृतरश्मित्वमाप्तं चन्द्रेण । मया निमज्जनेनामृतत्वमेव लभ्येत ॥

**पूर्वेण तां तद्वदुदारनिम्न-**
**प्रसन्नशीताशयमग्ननाथाः ।**
**पराङ्कुशाद्याः प्रथमे पुमांसो**
**निषेदिवांसो दश मां दयेरन् ॥ ४१ ॥**

मुनिमनःपद्मेषु पुष्करिण्यां च नाथविहार उक्तः । तापत्रयतप्तानां चेतनानां पद्मिनीमज्जनमुक्तम् । इदानीं नाथस्यैव पराङ्कुशादिशीताशयमज्जन-मुच्यते । यथास्मत्तापनिर्वापणमत्र मज्जनेन, तथा नाथतापनिर्वापणं शठ-कोपादिसूरिशीताशयमज्जनेन । स्वानुभवसागरे नाथस्य मज्जयितार इति तेषां मज्जकसंज्ञेव । मग्ननाथा इति नाथस्य तदाशयमज्जनं स्पष्टमुच्यत इव । अन्तर्भावितणिजभिप्रेयत इव मज्जकसंज्ञायाम् ।

**तां पूर्वेण** । पूर्वदिशि पूर्वपुंसां निषदनमुचितम् । पूर्वेण पूर्वे ॥

**तद्वदुदारनिम्नप्रसन्नशीताशयमग्ननाथाः** । 'एष ब्रह्म प्रविष्टो-ऽसि ग्रीष्मे शीतमिव ह्रदम्' इति तत्तचेतनानुभवः । तद्वदत्र शठकोपादी-नामाशये मज्जनानुभवो नाथस्य । मुनिमनःपद्मसरसि मज्जनेन भक्तत्रयग्रहेण

तत्तस्य नाथस्य शैत्यानुभवः । आशेरतेऽस्मिन्भावा इति आशयपदं हृदय-वाचि । हृदयमेव हृदो भवति । आशेतेऽत्र ब्रह्म ।

पराङ्कुशाद्याः प्रथमे पुमांसः । 'स उत्तमः पुरुषः' इत्युक्तपुरु-षोत्तमपरमसाम्यापन्ना निरञ्जनाः ॥

निवेश्विवांसो दश मां दयेरन् । मां भगवते रोचयेरन् । इमे दश अवताराः मां भगवदनुभवसागरे अवतारयेयुः ।

आधारशक्तिमुपरि प्रकृतिं परेण
तां कूर्ममत्र फणिनं पृथिवीं फणासु ।
पृथ्व्यां पयोधिमधि तन्नलिनं निधाय
श्रीरङ्गधामसु निविष्टमभिष्टवानि ॥ ४२ ॥

विमानानुभवः । स्वाधिष्ठिते विश्वस्मिन् भगवान् प्रतिष्ठितः । भगवच्छक्त्या धृता प्रकृतिः । प्रकृतिमण्डलं कूर्मे प्रतितिष्ठति । कूर्मे शेषः । तत्फणासु पृथिवी । तस्यां समुद्रः । तस्मिन्नष्टदलपद्मम् । तस्मिन् प्रतिष्ठितं विमानमिति क्रमः प्रदर्श्यते ।

आधारशक्तिमुपरि प्रकृतिम् । सर्वधारकभगवच्छक्तिराधारश-क्तिः । तदुपरि निधाय । निधायेति सर्वत्रान्वेति ।

परेण तां (प्रकृतिं) कूर्मम् । अत्र कूर्मे .... शेषः , तत्फणा-सु पृथिवी ; तस्यां पृथिव्यां पयोधिः , तं पयोधिमधि नलिनमष्टदलप-द्मम् ॥ ४२ ॥

परेण नाकं पुरि हेममय्यां
यो ब्रह्मकोशोऽस्त्यपराजिताख्यः ।
श्रीरङ्गनाम्ना तमपौरुषेयं
विमानराजं भुवि भावयानि ॥ ४३ ॥

प्रकृतिं परेणेत्याद्युक्तम् । नाकं परेण स्थिता पूरुच्यते । अत्र परमपदस्थ-

पुर्यां रङ्गविमानस्योपलक्षणम् ।

**नाकं परेण** । स्वर्गादप्युपरि ।

**हेममय्यां पुरि** । हिरण्मयस्य पुरुषस्य हेममयी पुरी ।

**यो ब्रह्मकोशोऽस्त्यपराजिताख्यः** । कोशो मन्दिरं विमानम् । ब्रह्मकोशश्च ओङ्कारः । 'ब्रह्मणः कोशोऽसि मेधया पिहितः' इति तैत्तिरयः । वेदस्तस्मात्कोशादुद्ध्रियते । अन्ते च तस्मिन् न्यस्यते । कोश इव ब्रह्मणो वेदस्योङ्कारः । ब्रह्मणोऽप्योङ्कार आयतनम् । श्रीरङ्गविमानं च प्रणवाभिन्नम् ।

**अपराजिताख्यः** । अयोध्या अपराजिता । नास्याः कालादिना पराजयः । कालः सर्वं विकुर्यादिमामेकां पुरीं विहाय । 'न कालस्तत्र वै प्रभुः' ।

**श्रीरङ्गनाम्ना** । नाममात्रभेदः । न वस्तुभेदः ।

**तम्** । स एव विमानराजोऽत्र नामभेदेनानुभूयते ।

**विमानराजं भुवि भावयामि** । सदा पश्यन्ति सूरयः परमपदे । अत्र भुवि वयं तं निरन्तरं भावयाम ॥ ४४ ॥

**अनाद्याम्नातत्वात् पुरुषरचनादोषरहितं**
**जने तांस्तान् कामान् विदधदपि सायुज्यहृदयम् ।**
**असन्देहाध्यासं भगवदुपलम्भस्थलममी**
**प्रतीमः श्रीरङ्गं श्रुतिशतसमानार्धि शरणम् ॥ ४४ ॥**

अपौरुषेयमिति सिद्धवत्कृत्योक्तं पूर्वश्लोके । अत्र तत् साध्यते प्रथमपादेन । आद्यं स्वयंव्यक्तमिदं क्षेत्रम् । अनादित्वेनाम्नातमिदम् ।

**अनाद्याम्नातत्वात्** । ओङ्कारः स्वभिन्नवेदभागस्यादिः । ओङ्कारस्त्वत्यन्तमनादिः । ओङ्कारेणादिमन्तो वेदाः । तेऽप्यपौरुषेयत्वेनाभ्युपगम्यन्ते । किं वक्तव्यमोङ्कारस्यापौरुषेयत्वे ।

**पुरुषरचनादोषरहितम्** । पुरुषाप्रणीतत्वमपौरुषेयत्वम् ।

**जने तांस्तान् कामान् विदधदपि** । सर्वफलसर्वरसप्रदत्वेऽपि । 'एको बहूनां यो विदधाति कामान्' इति ब्रह्मविषयश्रुतिः । 'नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्' इति रङ्गप्रवृत्तनाट्यविषयमहाकव्युक्तिरपि प्रत्यभिज्ञाप्यते । एकस्मिन् रङ्गे सर्वरसनिष्पत्तिः । एकं रङ्गं बहुधा भिन्नजनस्य तांस्तान् कामान् विदधाति । अघटितसर्वफलघटकं रङ्गम् ।

**सायुज्यहृदयम्** । सर्वरसप्रतिपादकत्वेऽपि ब्रह्मसायुज्यरूपशान्तिरसेऽस्य हृदयम् । मोक्षपुरुषार्थदानेऽस्य मुख्यं कुतूहलम् । सायुज्यरहस्यमिति वा भावः । पृथक्त्वज्ञानेनैव त्रिवर्गार्थित्वम् । अपृथक्त्वरूपसायुज्यरहस्यं प्रणवेन स्फुटं बोध्यते ।

**असन्देहाध्यासं भगवदुपलम्भस्थलम्** । ओङ्कारे भगवान्निःसन्देहमनध्यासमीक्ष्यते । तथाऽत्र तदभिन्ने रङ्गे । 'परस्य ब्रह्मणो रूपं शेषित्वं स्फुटमीक्ष्यते ।' स्फुटशब्दस्य विवरणमसन्देहाध्यासमिति । स्थलशब्देन क्षेत्रत्वद्योतनमपि । अतस्मिन् तद्बुद्धिरध्यासः । अत्र रङ्गे दृश्यमानः पुरुषो भगवानेव । नेदं प्रतीकेऽब्रह्मणि ब्रह्मदर्शनम् ; किं तु ब्रह्मण्येव ब्रह्मबुद्धिः , अग्नावग्निबुद्धिरिव । योषित्यग्निबुद्धिरध्यासमूला स्यात् । इदं बोध्यतेऽनध्यासेति ।

**अमी प्रतीमः श्रीरङ्गं श्रुतिशतसमानर्धिशरणम्** । अमी वयं श्रीरङ्गं भगवत एव स्फुटाभिव्यक्तिस्थानमिति श्रद्दध्महे । प्रतीमः प्रत्ययं विश्वासं कुर्मः । श्रुतिशतसमानर्धि । उपनिषदो भगवन्तमतिसमीपे प्रदर्शयन्ति । ततोऽपि समीपे प्रदर्शयितृ इदं शरणम् । ऋद्धिश्च समीपप्रदर्शयितृत्वरूपमहिमा । शरणं गृहं मन्दिरम् । इदं शरणमज्ञानामस्माकम् । श्रुतयः सर्वा अप्योङ्कारव्याप्ता ओङ्कारान्तर्गताश्च ।

**अपि फणिपतिभावाच्छुभ्रमन्तःशयालो-**
**र्मरकतसुकुमारै रङ्गभर्तुर्मयूखैः ।**
**सकलजलधिपानश्यामजीमूतजैत्रं**
**पुलकयति विमानं पावनं लोचने नः ॥ ४५ ॥**

भगवन्तं स्फुटमभिव्यनक्ति विमानमित्युक्तम् । सत्त्वस्य प्रकाशकत्वम् । भास्वरं शुक्लं सत्त्वम् । इदं तु विमानं नीलं भासेत । कथमस्य सत्त्वत्वम् , भगवत्प्रकाशकत्वं वेति शङ्कायां उच्यते ।

**फणिपतिभावाच्छुभ्रमपि** । फणिपतिः शुभ्रः । तद्भावाच्छुभ्रमेवेदम् । तथाऽपि नीलीभवत्यन्तःशयानभगवन्मयूखैः । स्वतः सत्त्वमयत्वाच्छुभ्रम् ।

**अन्तःशयालोर्मरकतसुकुमारै रङ्गभर्तुर्मयूखैः** । शशिवर्ण इति वर्ण्यते भगवान् प्रसिद्धे सर्वैः प्रत्यहं पठ्यमाने 'शुक्लाम्बरधरं विष्णुम्' इति ध्यानश्लोके । स च श्लोकः शिवरहस्यस्थ इति दीक्षिताः । श्वेतवर्णत्वं भगवद्विग्रहस्य स्वाभाविकम् । तथाऽपि घनकरुणारसौघभरितत्वात् तस्य मेघवन्नीलत्वमिति तैरुच्यते । अत्र शुभ्रमपि विमानमन्तःस्थमरकतभूधरनीलमयूखैर्जीमूतनीलं भवति । सुकुमारैरिति मयूखानां विशेषणं नयनयोः पुलकसम्पादनेन सप्रयोजनं भवति ।

**सकलजलधिपानश्यामजीमूतजैत्रम्** । घनकरुणारसौघभरितभगवन्नीलिमप्रयुक्तश्यामकान्तिः सकलजलधिपानेन श्यामतमं जीमूतमप्यतिशेते ।

**पावनं विमानम्** । नीलकान्तिशबलत्वेऽपि शुद्धसत्त्वमयं शुद्धम् ।

**नो लोचने पुलकयति** । लोचने सञ्जातपुलके करोति । नीलिमा , शैत्यम् ; सौकुमार्यमिति सर्वं नेत्ररञ्जकम् । सुकुमारा नीलरश्मयो नेत्रयोः संयुज्य पुलकमुत्पादयन्ति । सुकुमारत्वं विना कथं नेत्रयोः सुखसंयोगः ।

**व्यापिरूपमपि गोष्पदयित्वा**
**भक्तवत्सलतयोज्झितवेलम् ।**
**तद्द्विषन्तपनृकेसरिरूपं**
**गोपुरोपरि विजृम्भितमीडे ॥ ४६ ॥**

मध्यस्थं विमानं दूरादनुभूतम् । इदानीं श्रीनृसिंहरूपमनुभूयते । 'दिविस्पृशत्कायम्—' इति श्रीनृसिंहावताररूपस्य निरतिशयव्यापित्वं प्रसिद्धम् । उज्झितवेलं वेलातीतमपरिमितं तद्रूपं स्वभावतः । उज्झितवेलत्वोक्त्या तद्रूपस्य वारिधित्वं बोध्यते । उज्झितवेलोऽयं वारिधिः । एतमुज्झितवेलं वारिधिं गोष्पदीकृत्य । भक्तवत्सलतयाऽस्माभिः सुग्रहत्वाय ।

**उज्झितवेलम्** । स्वभावतो मर्यादातीतमनन्तमपारम् ।

**व्यापिरूपमपि** । विष्वग्व्याप्तमपि । निरतिशयबृहन्मूर्ति ।

**भक्तवत्सलतया गोष्पदयित्वा** । प्रह्लादार्भकार्थमवतरन्नृसिंहो वात्सल्यैकनिधिः । अर्भकविषयकृपाया वात्सल्यशब्देन निर्देशः । अच्युतस्यास्यावतारनिमित्तभूतं वात्सल्यं न कदाऽपि च्यवते । अस्मासु वात्सल्येनात्मनो निरतिशयं बृहद्रूपं गोष्पदवदल्पीकृत्य ।

**तत्** । अवतारकालिकबृहद्रूपपरामर्शः ।

**द्विषन्तपनृकेसरिरूपम्** । प्रबलशत्रुविषयः क्रोध अवतारकाले द्विषन्तप तद्रूपं भीषणमतिबृहत् । 'विनाशाय च दुष्कृताम्' इति शत्रुविनाशोऽप्यभिप्रेतः । ततस्तस्य रूपस्य बृहत्त्वभीषणत्वादि । अत्र 'परित्राणाय साधूनाम्' इति भक्तवत्सलतामात्रमस्माकं स्वतनुविवरणे प्रयोजकम् । तदर्थं भूम्नोऽल्पभूमिकापरिग्रहः । भक्तवत्सलतयेत्यवधारणगर्भम् । तेन चशब्दोक्तदुष्कृद्विनाशो व्यावर्त्यते ।

**गोपुरोपरि विजृम्भितम्** । न स्तम्भं निर्भिद्य । किं तु गोपुरोपरि विजृम्भितम् । विजृम्भणं चोत्तरश्लोके वर्ण्यते ।

ईडे । 'हरिमीडे' इति श्रीशङ्कराचार्यकृतं स्तोत्रम् । श्रीशङ्कराचार्यो नृसिंहभक्तः । हरिः सिंहः । सिंहविषये 'ईडे' इति प्रयोगश्चारुतरः ।

**अहमलमवलम्बः सीदतामित्यजस्रं**
**निवसदुपरिभागे गोपुरं रङ्गधाम्नः ।**
**क्वचन नृपरिपाटीवासितं क्वापि सिंह-**
**क्रमसुरभितमेकं ज्योतिरग्रे चकास्ति ॥ ४७ ॥**

विमानमन्तर्ज्योतिः श्रीरङ्गधामा । गोपुरोपरि जृम्भमाणमिदं नृसिंहज्योतिः । द्वार एव गोपुरोपरि दृश्यत इदं तेजः । ततो घनकरुणारसौघभरितादपि रङ्गमहसो विमानान्तर्ज्योतिषोऽस्याधिकं वात्सल्यम् ।

**सीदताम्** । दीनानाथानां तापत्रयव्यथितानाम् । उपसदनमपि मास्तु । सदनमेवालं मत्कृपालब्धय इति व्यज्यते । मोपसीदन्तु । सीदन्तु केवलम् । तदेवालम् ।

**अहमलमवलम्बः** । अहं पर्याप्तमवलम्बनम् । 'हस्तावलम्बनं ह्येको भक्तिक्रीतो जनार्दनः' इति प्रमाणवचनप्रत्यभिज्ञापनमिवावलम्बनपदावलम्बनेन । नात्र भक्त्या क्रयापेक्षेति वैजात्यमपि । 'लक्ष्मीनृसिंह मम देहि करावलम्बम्' इति श्रीशङ्करानुभवोऽपि स्मार्यतेऽवलम्बशब्देन । प्रार्थनां विनाऽप्यहं सज्जो रक्षितुम् ।

**इति** । एवं वदन्निव ।

**अजस्रम्** । न क्षणकालं यथा सन्ध्यायां महासुरसभायाम् ।

**रङ्गधाम्नः** । यथा रङ्गराजस्य विमानं धाम गृहं भवति, तथाऽस्य नृसिंहस्य गोपुरोपरिभागो धाम निवासस्थानं भवति रङ्गनिवासिनः । उभयोस्तेजसोर्निवासवत्त्वमुच्यते ।

**गोपुरोपरिभागे** । न स्तम्भमध्ये, सभामध्ये वा ।

**निवसत्** । धामवत् ।

**क्वचन नृपरिपाटीवासितम्** । 'भारूपः सर्वगन्धः' इत्युक्तं वेलातीतपरिमलमिदं ज्योतिः । वासितमिति हृदये वासनारूपसंस्काराधानमपि द्योत्यत इव । महापुरुषस्य पुरुषोत्तमस्य सुपरिमलवत्त्वं सहजम् ।

**क्वापि सिंहक्रमसुरभितम्** । मृगराजस्य परिमलवत्त्वं स्यात् । अस्य ब्रह्मसिंहस्य परिमलवत्त्वं निःसंशयम् । मद्धृदयगुहायां निवसेदयं सिंहस्तत्र सौरभ्यमादधीतेति मनोरथ इव ।

**एकं ज्योतिः** । अखण्डमेकमिदं ज्योतिः । यद्यपि स्तम्भः खण्डितः; यद्यपि स्वतनुरपि नरत्वसिंहत्वाभ्यां खण्डितेव, स्वरूपमखण्डमेव ।

**अग्रे** । नान्तः ।

**चकास्ति** । स्वां तनुं स्वयं विवृणुते ।

**संशोध्य पावनमनोहरदृष्टिपातै-**
**र्देवाय मामपि निवेदयतां गुरूणाम् ।**
**सव्योत्तरे भगवतोऽस्य कटाक्षवीक्षा-**
**पंक्तिं प्रपद्य परितः परितो भवेयम् ॥ ४८ ॥**

भगवज्ज्योतिरग्रे चकास्तीत्युक्तम् । न साक्षात् तदाश्रयणीयं भवेत् । तस्मै निवेदनीया वयं घटकैर्गुरुभिः । संशोध्य च निवेदनीयाः । तदैव वयं तस्मा अन्नं भोग्यं भवेम । निवेदनं च शुद्धस्य भोग्यस्य स्यात् । संशोध्य निवेदनमुच्यते ।

**अस्य भगवतः** । अस्य ज्योतिषः । ज्योतिषि प्रत्यग्रूपहविष ऋत्विग्भिर्होम उचितः । एतदुच्यते देवायेति ।

**सव्योत्तरे** । 'ब्रह्म दक्षिणतो ब्रह्मोत्तरतः' इतिवत् गुरवो ब्रह्मज्योतिः परितो निषण्णाः ।

**मामपि** अशुद्धमपि माम् । 'निवेदयत माम्—' इति विभीषणोक्तिः स्मार्यते । अपीति तत्राभिप्रेतार्थविवरणम् ।

**पावनमनोहरदृष्टिपातैः** । अशुद्धं मनो ह्रियते विषयेभ्यः । भगवति च लयमेष्यति । अस्मदृष्टेस्तेषु पतनात् पूर्वमेव तेषां दृष्टयोऽस्मासु पतन्ति । पावनत्वं रमणीयत्वं च । 'ते पुनन्त्युरुकालेन दर्शनादेव साधवः' इत्यस्मद्दर्शनमात्रेणास्मान् सद्यः पुनन्ति । तद्दृष्टिपतनेन पावयितृत्वं सिद्धमेव । शक्तिनिपातः, दृष्टिनिपात इति गुरुवीक्षणमहिमा वर्ण्यते कुत्रचित् ।

**संशोध्य** । सम्यङ्निर्मलीकृत्य । परीक्ष्य विविधोपायैरिति न परीक्षादिकरणम् । संशोध्येति परीक्ष्येत्यपि स्यात् । तदपि स्वार्थत इव तद्यावर्त्य सौलभ्यप्रदर्शनार्थम् । अशुद्धमपि मां संशोध्य ।

**देवाय** । 'तं देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति प्रपत्तव्यत्वं देवस्य । देवशब्देन श्रुतिस्मारणमिव ।

**निवेदयताम्** । समर्पयतां हविरिव । आत्मद्रव्यकयागो ज्ञानयज्ञः । आत्मयाजिनो गुरवः ।

**गुरूणाम्** । हृदयगुहान्धकारनिरोधिनाम् ।

**कटाक्षवीक्षापंक्तिम्** । 'गुरुपंक्तिमहं प्रपद्ये' इतिवन्न गुरुपंक्तिप्रपदनम् । किं तु गुरुवीक्षापंक्तिप्रपदनम् । तद्वीक्षणैर्निवेदनं भवति । 'दिशि दिशि निपतद्भिर्देशिकैर्नीयमाना भगवदनुकम्पा' ।

**परितः प्रपद्य** । सम्यगुपपद्य । समाश्रित्य । 'परिप्रश्नेन' 'परिपप्रच्छ' इतिवत् गुरुविषयं परितः प्रपदनम् ।

**परितो भवेयम्** । परितः प्रपदनस्य परितो भवनं फलम् । न भवनमात्रम् । 'तं सर्वगं सर्वतः प्राप्य धीराः कृतात्मानः सर्वमेवाविशन्ति' इत्यादिकं भाव्यम् । परितः परितः प्रपद्य भवेयम् ; सत्तां लभेय इति वा ॥

**श्रीरङ्गराजकरनाळितशालिकाभ्यो**
**लक्ष्म्या स्वहस्तकलितश्रवणावतंसम् ।**

**पुन्नागतल्लजमजस्रसहस्रगीति-**
**सेकोत्थदिव्यनिजसौरभमामनामः ॥ ४९ ॥**

परितो भवनं वर्ण्यते । अश्वत्थः सोमसवन इति परमपदे । अत्र पुन्नागो वर्ण्यते । नाश्वत्थः कुसुमदः । अयं तु लक्ष्मी........कर्णावतंसकुसुमदः । तत्राश्वत्थसमीपे 'अहमन्नमहमन्नम्—' इत्यादिमुक्तगीतिर्भवेत् । अत्र द्राविडप्रबन्धसहस्रगीतिर्भवति । तद्गीत्यार्द्ररसेन सिच्यते ।

**श्रीरङ्गराजकरनम्रितशाखिकाभ्यः** । तुङ्गस्तनभरनता लक्ष्मीः । भगवदपेक्षयौन्नत्यं न्यूनमेव च स्यात् स्वभावतः । तस्या हस्तस्पर्शे जाते महद्दोहदं कृतं स्यात् वृक्षस्य । यदि रङ्गराजः स्वयमेव कुसुममपचिनुयात्तस्याः करस्पर्शो न स्यात् । इदानीं द्वयोरपि करस्पर्शो भवति । अतः स्वकरेण शाखां नम्रयति, साऽपि तां स्पृष्ट्वा पुष्पमपचिनुयादिति । 'प्रीतिं वो जनयन् यातः करस्पर्शेन माधवः' इति भगवत्करस्पर्शेनास्त्येव प्रीतिर्वृक्षस्य । द्विगुणा प्रीतिरुभयोः करस्पर्शे ।

**लक्ष्म्या** । तस्याः करस्पर्शो भवेत्पुष्पावचये । गन्धद्वारायास्तस्याः करस्पर्शेन दिव्यपरिमलाधानं स्यात् ।

**स्वहस्तकलितावतंसम्** । स्वहस्तविशेषणं स्वहस्तापचितत्वमपि द्योतयति । न सैरन्ध्र्या कलितोऽवतंसः । स्वहस्तेन कलितत्वं बहुमानभूयस्त्वां द्योतयति । भगवन्नमितशाखापचितकुसुमम् । गाथाश्रवणभाग्यवत् ।

**अजस्रसहस्रगीतिसेकोत्थदिव्यनिजसौरभम्** । सहस्रगीतिश्च श्रीशठकोपगाथासहस्री । तस्या आर्द्रता, रसमयता; परिमळवत्ता च सुप्रसिद्धा । तद्रससेकेन वकुलसुमनोवासना धीयते । दिव्यनिजसौरभमिति गीतीनां निजं वकुलसौरभं स्यात् । विचित्रमिदं पुन्नागवृक्षो वकुलसौरभविशिष्ट इति ।

**पुन्नागतल्लजम्** । पुन्नागजातावयमेवोत्कृष्टतमः । कस्यापरस्येदृशं भाग्यम् ।

**आमनामः** । गाथासहस्रमामनन्त्यध्यापकाः । वयं पुन्नागतल्लजमामनामः । आम्नायरससिक्तमामनामः ॥

**श्रीरङ्गचन्द्रमसमिन्दिरया विहर्तुं**
**विन्यस्य विश्वचिदचिन्नयनाधिकारम् ।**
**यो निर्वहत्यनिशमंगुलिमुद्रयैव**
**सेनान्यमन्यविमुखास्तमशिश्रियाम ॥ ५० ॥**

गाथासहस्रगुक्त्या कारिसूनुरप्युक्तः । 'सेनापतेः पथि च कारिगृहेऽवतीर्णम्—'इति सेनापत्यंशत्वमपि श्रीशठकोपसूरेर्गम्यते । इदानीं सेनापत्याश्रयणम् । गुरुपरम्परायां वकुलभूषणोपरि सेनेशः ।

**श्रीरङ्गचन्द्रमसमिन्दिरया विहर्तुं विन्यस्य** । 'अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते । भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते ॥' इतिवत्तौ भोगे विन्यस्य । इन्दिरया सह विहरणे विन्यस्य । तद्भरोऽस्मिन् न्यस्यते । ईश्वरभरो गुरुषु न्यस्यते । तत्सन्निवेशितभर ईश्वरो निर्भरः ।

**विश्वचिदचिन्नयनाधिकारम्** । चिदचिन्नयनमीश्वरकृत्यम् । तन्निरुह्यते सेनेश्वरेण ।

**अनिशम्** । जाग्रतः स्वपतश्च मिथुनस्य ।

**अंगुलिमुद्रयैव** । युक्तमस्य गुरोरंगुलिमुद्रयैव शिष्यनयनम् ।

**सेनान्यम्** । सेनानायकस्याज्ञा यथावन्निर्वर्तनीयाः । तद्भङ्गे सद्यो महान् दण्डः । तथैव गुरोराज्ञा न भञ्जनीयाः ।

**अन्यविमुखाः** । विष्वक्सेनाद्विमुख्यं नोचितम् । विष्वक् खलु तस्य सेना व्याप्ताः ।

तमाशिश्रियाम । प्रथमं प्रणिपातः कृतः । अनन्तरं तस्य वृत्तत्वं कीर्त्यते ॥

सैन्यधुरीणप्राणसहायां सूत्रवतीमाशिश्रियमम्बाम् ।
श्रीपदलाक्षालाञ्छितसेवाप्रोतलसद्दोर्वल्लिविलासाम् ॥ ५१ ॥

आचार्याश्रयणानन्तरमाचार्यान्याश्रयणम् ।

सैन्यधुरीणप्राणसहायाम् । प्राणभूता प्राणसमा सहाया ।

अम्बाम् । सेनापतेः पत्नी । मम अम्बा । मातुर्गरीयस्याचार्यानी । 'शरीरमेव मातापितरौ जनयतः ।'

सूत्रवतीम् । प्राणस्य वेदान्तग्रन्थेषु सूत्रत्वेन व्यवहारो दृष्टचरः । भर्तृप्राणाः सूत्रवती । प्राणसहाया सूत्रवती ।

श्रीपदलाक्षालाञ्छितसेवाप्रोतलसद्दोर्वल्लिविलासाम् । अस्या दोर्लतायां लक्ष्मीपदसेवाकाले तल्लाक्षालाञ्छितं प्रोतमार्द्रवस्त्रं लतालम्बिवल्कलवद्विलसति । समस्तजनन्याः सेवानियुक्ता मदम्बा वेत्रवती ॥

विदधतु सुखं विष्वक्सेनस्य ते प्रथमं भटाः
करिमुखजयत्सेनौ कालाह्वसिंहमुखौ च नः ।
जगति भजतां तत्तत्प्रत्यूहतूलदवानला
दिशि दिशि दिवारात्रं श्रीरङ्गपालनकर्मठाः ॥ ५२ ॥

पत्नी वन्दिता । सेनान्यो भटाः स्युः । चत्वारो भटाश्चतसृषु दिक्षु पालयन्ति । तेभ्यः शर्म प्रार्थ्यते ।

जगति भजताम् । भगवदुपासकानाम् ।

दिशि दिशि । एकैकेन प्रधानभटेनैकैकस्यां दिशि पालनम् ।

दिवारात्रम् । सेनान्योऽनिशं पालनं भटैर्दिवारात्रं पालनेन सुकरं भवति ।

तत्तत्प्रत्यूहदवानलाः । विघ्नायुतं सहजं गोविन्दभक्तानाम् ; तद्भक्तिमाशंसमानानाम् । तद्विघ्नास्तूलीभवन्ति । एते च दवानला भवन्ति ।

श्रीरङ्गपालनकर्मठाः । अकर्मवश्या अप्येते कर्मठा भवन्ति । अग्निसाध्यं कर्म । तद्वत्त्वं व्यज्यते दवानलत्वेन । बहुव्रीह्याश्रयणेन तद्वत्त्वम् ॥

**श्रुतिमयमतिहर्षप्रश्रयस्मेरवक्त्रं**
**मणिमुकुरमिवाग्रे मङ्गलं रङ्गधाम्नः ।**
**शरणमभिगताः स्मो यत्र रूपस्वरूप-**
**स्वगुणमहिमदर्शी मोदते रङ्गशायी ॥ ५३ ॥**

विष्वक्सेनप्रदक्षिणं कुर्वंस्तत्प्राकारमध्यवर्तिगोपुरस्य पुरतो भगवदग्रेऽवस्थितबृहद्रूपं गरुत्मन्तमभिष्टौति ।

**श्रुतिमयम्** । वेदात्मा । यथा वेदो भगवन्तमस्मत्समीपं प्रापयति तथाऽयं वेदात्मा वाहनं भूत्वा तमस्मत्समीपमानयति । वह प्रापणे । श्रुतिमयः सर्पः पर्यङ्कः । श्रुतिमयो गरुडो वाहनम् ।

**अतिहर्षप्रश्रयस्मेरवक्त्रम्** । हृष्टं प्रसन्नं स्मेरं मुखम् सदा भगवद्दत्तचक्षुषः ।

**रङ्गधाम्नः अग्रे** ; यद्यप्ययं धाम तेजोमयः, अयमनेनैव प्रकाश्येत ।

**मणिमुकुरमिव मङ्गलम्** । मणिदर्पणस्य माङ्गलिकत्वम् । तदर्थं तस्य मुखाग्रेऽवस्थापनं सहजम् । श्रुतिर्भगवतो मणिदर्पणो भवति । 'महति मुहुरामृष्टे मनौ मणिदर्पणे' इति भगवन्मन्त्रविषयेऽनुभवः । न श्रुतिसमानं विशदप्रकाशकं भगवत्स्वरूपस्य ।

**यत्र** । मणिमुकुरे ।

**रङ्गशायी** । शयानः पुरुषोऽग्रे मुकुरमवस्थाप्य शयीत प्रभाते मङ्गलं तं द्रष्टुम् । पूर्वं रङ्गधामेति । अत्र रङ्गशायीति ।

**रूपस्वरूपस्वगुणमहिमदर्शी** । स्वरूपरूपगुणविभूतितयेति क्रमः ।

अत्र रूपस्य प्रथमं निवेशनम् । 'मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यद्-त्यद्भुतम्' इति रूपस्य स्वरूपादपि प्रियतरत्वमनुसृत्य । नीरूपस्वरूपापेक्षया विग्रहस्य बिम्बितत्वं सुलभम् । अनन्तरं स्वरूपस्य । अनन्तरं तद्गुणानां तेषामद्रव्यत्वात् ।

मोदते । 'तेनैव सह मोदते' इति प्रमाणवचनं स्मार्यते ॥

**तार्क्ष्यपक्षतिबदस्य वल्लभां**
**रुद्रया सह सुकीर्तिमर्चये ।**
**हर्षबाष्पमपि कीर्तिमर्थिनां**
**यन्मुखेन कमला कटाक्षयेत् ॥ ५४ ॥**

गरुडपत्न्यौ वन्द्येते । पक्षौ प्राणसमौ पक्षिणः । आनन्दमयपक्षिणः 'मोदो दक्षिणः पक्षः' 'प्रमोद उत्तरः पक्षः' ।'अलिखचञ्चुपुटेन पक्षती' इति नैषधे । पक्षमूलं पक्षतिः । वानरस्य वालवत् पक्षतिर्वल्लभा पक्षिणः । 'चुचुम्ब पुच्छम्' । पक्षतिसंख्या पत्नीसंख्यासमाना । 'एवंविधरूपविविधचेष्टितहृत-हृदयान्सानन्दबाष्पान् कुर्वन् रोदयतीति रुद्र' इति रुद्रनामनिर्वचनं सहस्र-नामभाष्ये । पक्षवद्वल्लभे इमे पत्न्यौ । कमला एतद्द्वाराऽर्थिनामानन्दबा-ष्पम् ; कीर्तिं च कटाक्षयत्यनुगृह्णाति । रुद्रयानन्दबाष्पम् ; सुकीर्त्या कीर्तिं च । रुद्रा भक्तेषु न दुःखाश्रुमती ; किं त्वानन्दाश्रुमती, तत्प्रवाहयित्री च ॥

**स्वास्त्ररूपस्फुरन्मौलि मा शब्द इ-**
**त्युद्गनानां सुरांस्तर्जनीमुद्रया ।**
**नाथनिद्रोचितोन्निद्रताम्रेक्षणां**
**सञ्चरन्तीं स्तुमस्तां च पञ्चायुधीम् ॥ ५५ ॥**

भक्तानामानन्दबाष्पप्रवाहयित्री रुद्रा देवी नता । विरोधिनां दुःखाश्रुप्रवर्त-यित्री पञ्चायुधी प्रणम्यते ।

**स्वास्त्ररूपस्फुरन्मौलि** । स्वेषामस्त्रत्वं यथा स्वशिरसि भासते तथाऽवस्थितिः । स्फुरन्मौलि यथातथा ।

**माशब्द इत्युद्भुनानां सुरांस्तर्जनीमुद्रया** । सेवार्थमायातान् ब्रह्मादीन् 'शब्दं मा कुरुत' इति तर्जनीमुद्रयैव प्रतिषेधति । मौनेनैव मुद्रामात्रेण तर्जनं ; भगवन्निद्राया अभङ्गाय ।

**नाथनिद्रोचितोन्निद्रताम्रेक्षणाम्** । स्वामिनि निद्राणे आयुधैरुन्निद्रैर्भाव्यम् । उन्निद्राणि निर्निमेषाणि ताम्राणीक्षणानि । प्रजागररक्तानि कोपरक्तानि ।

**सञ्चरन्तीं पञ्चायुधीम्** । नाथे निद्राणे तमभितः सञ्चरन्ति तद्रक्षायै ॥

> **अस्त्रग्रामाग्रेसरं नाथवीक्षा-**
> **सिन्धुक्षीबोद्वेलनृत्ताभिरामम् ।**
> **चक्रं दैत्यच्छेदकल्माषिताङ्गं**
> **भ्राम्यज्ज्वालामालभारि प्रपद्ये ॥ ५६ ॥**

पञ्चायुधी नता समुदायेन । श्रीसुदर्शनस्य मुख्यत्वम् । तस्य च पार्थक्येनास्त्यायतनं श्रीरङ्गे । पृथक्प्रपद्यते ।

**अस्त्रग्रामाग्रेसरम्** । 'अस्त्रग्रामविधौ कृती' इति वेण्यां कर्णः । न केवलं संग्रामाग्रेसरत्वम् । तत्तुल्यं पञ्चानामप्यायुधानाम् । तेष्वग्रेसरत्वमस्य ।

**नाथवीक्षासिन्धुक्षीबोद्वेलनृत्ताभिरामम्** । निग्रहशक्तिरुक्ता । अनुग्रहशक्तिरुच्यते । दुष्टनिरसनमुक्तम् । साधुपरित्राणमुच्यते । सिन्धुप्रियो नाथः । स्वयं च दयासिन्धुः । दयासिन्धुत्वं च वीक्षासिन्धुना भवति । वीक्षासिन्धावुद्वेलदयोतरङ्गताण्डवं भवति । तत्ताण्डवेऽतिवेगयुक्तावर्तचक्रं भवति । तदेवेदं चक्रमित्यत्रोत्प्रेक्षा । अस्यावर्तस्य न भीष-

णत्वम् ; किं त्वभिरामत्वमभिगम्यत्वम् । अभिगम्योऽयं सिन्ध्वावर्तः । अभिगम्यो रत्नैरर्णवः । क्षीबत्वमुन्मत्तत्वम् । क्षीबत्वमुद्धुलत्वं चोद्धततताण्डवनर्तनलक्षणम् ।

**चक्रम्** । चक्राकारोपपादनं कृतं द्वितीयविशेषणेन । इदानीं नामग्रहणं चक्रमिति ।

**दैत्यच्छेदकल्माषिताङ्गम्** । 'चक्रं तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधारम्' इति श्रीशाङ्करानुभवः । तत्र दितिजेति । अत्र दैत्येति । अत्र च्छेद उच्यते । तत्र गलद्रक्तधारा उक्ताः । तदुक्तिर्बीभत्सरसमुत्पादयेत् । अनुग्रहशक्तिवर्णनमत्र प्रायः । ततश्छेदमुक्त्वा कल्माषितत्वमात्रमुच्यते । न सद्यो गलदार्द्ररुधिरधारा वर्ण्यन्ते । स्वभृत्यसुरप्रतिभटरक्षोऽसुरशोणितकल्माषितज्वालाञ्चितं चक्रमस्येति ।

**भ्राम्यज्ज्वालामालभारि** । ताण्डवस्योन्मत्तत्वमुक्तम् । ज्वालाभ्रमणमुच्यते । प्रपत्तव्यत्वस्य भारवत्त्वं भारवहनशीलत्वमनुकूलम् । ताच्छील्ये णिनिः ।

**प्रपद्ये** । मद्रक्षणभरं न्यस्यामि । सुदर्शनश्च विष्णो रक्षणसन्नाहरूपतत्त्वम् ॥

**हनुभूषविभीषणयोः स्यां यतमाविह मोक्षमुपेक्ष्य ।**
**रघुनायकनिष्क्रयभूतं भुवि रङ्गधनं रमयन्त ॥ ५७ ॥**

पञ्चायुध्यनुभवो वृत्तः । तत्कार्यकरावनुभूयेते । 'एष सर्वायुधोपेतः' इति भगवद्रक्षार्थं सर्वायुधोपेतो विभीषणोऽनुभूयते । वाहनभूतविहगेश्वरोऽनुभूतः । तदधिकारभाग्घनुभूषोऽनुभूयते । आयुधा देवा अनुभूताः । इदानीं रक्षाभूतवानरराक्षसानुभवः ।

**हनुभूषविभीषणयोः स्याम्** । तयोरेवाहं भूयासम् । 'दासोऽहं

कोसलेन्द्रस्य—' इति प्रथमस्य रामदासत्वं प्रथमनिरूपकम् । अनन्तरमेवाह-मिति स्वप्रत्यक्त्वप्रतीतिः । न स इन्द्रप्रेषितः ; यथा शत्रुणा शङ्कितः । किं तु कोसलेन्द्रप्रेषितः । तादृशस्य राघवदासस्य दासोऽहं भूयासम् । एत-योरुभयोरन्यतरोऽहं स्यामिति वा मनोरथः । अनयोरन्यतरस्य दास्य-रीतिर्मया ईप्स्यते । यथा असंख्येषु भगवद्भक्तेष्विमौ यतमाविति निर्दिश्येते; तथाऽहमनयोरन्यतरः स्याम् । 'दुर्लभो मानुषो देहः' इति दुर्लभे लब्धे मानुषदेहेऽनादरः । मास्तु मानुष्यम् । वानरो वा भूयासम् ; राक्षसो वा भूयासम् । अहमनयोरन्यतरो भवेयम् ।

**यतमाविह मोक्षमुपेक्ष्य** । वयं मोक्षमपेक्ष्य मोक्षार्थं श्रीरङ्गे निव-सामः । इमौ तु करस्थं सिद्धं परमपुरुषार्थमुपेक्ष्यात्र निवसतः । परमपुरुषा-र्थादपि परमत्वबुद्धिरनयो रङ्गधनानुभवे ।

**रघुनायकनिष्क्रयभूतम्** । रघुनायकस्य प्रतिभूः श्रीरङ्गधामा । यद्यपि रघुनायकोऽनयोर्नायकः, एतद्भक्तिक्रीतः सः अनयोर्विक्रयार्हो भवतीति व्यज्यते नायकशब्देन क्रयशब्दोपादानेन च । दासो विक्रययोग्यः । अत्र नायको विक्रीयते । नायकशब्देन नायकरत्नत्वद्योतनमपि विक्रेयत्वोपपादनाय । रामरत्नं विक्रीयते । रङ्गधनं रङ्गरत्नं च क्रीयते । रामाराध्यं रामकुल-धनं रङ्गधनं रामादधिकार्घम् ।

**भुवि** । राघवस्य सदृशः प्रतिभूः परमपदे स्यात् । भुवि तत्प्रतिभूः श्रीरङ्गधामैव । चतुराविमावल्पं दत्वाऽधिकं क्रीणीतः । आराधकं विक्रीया-राध्यं क्रीणीतः ।

**रङ्गधनम्** । धनार्थं विक्रयः स्वरसः । बहुभिः प्रकारैरस्य धनत्वं चारु निरूप्यते । 'धनञ्जयविवर्धनं धनमुदूढगोवर्धनं सुसाधनमबाधनं सुमन-सां समाराधनम्' इति वैराग्यपञ्चके ।

**रमयेते** । धनेन रमेरञ्जनाः । धनं रमयेते इमौ । 'एष ह्येवानन्द-

भाति' इति प्रसिद्धं सर्वानन्दहेतुभूतमानन्दमयमानन्दयतः ॥

**इतो बहिः पञ्च पराञ्चि खानि**
**प्रत्यञ्चि तानि स्युरितोऽन्तरित्थम् ।**
**औपाधिकेभ्यो निरुपाधिभोग्ये**
**प्रत्याहरद्वेत्रवरं भजामि ॥ ५८ ॥**

अन्तर्ज्योतिर्दिदृक्षितं रङ्गमहः । आवृत्तचक्षुषा दृश्यैतान्तरं प्रत्यग्ज्योतिः । न पराक्चक्षुषा । प्रत्याहारदृश्यमिदम् ।

**इतो बहिः पञ्च पराञ्चि खानि** । 'पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ्पश्यति नान्तरात्मन्' इति श्रुतिः प्रत्यभिज्ञाप्यते परांचि खानीति श्रुतिखण्डोपादानेन । श्रुतौ पञ्चेति नोक्तम् । कर्मेन्द्रियाणां प्रत्यङ्मुखत्वासम्भवाज्ज्ञानेन्द्रियमात्रतात्पर्यकत्वं श्रौतस्य खशब्दस्येति पञ्चसंख्याग्रहणेन बोध्यते ।

**प्रत्यञ्चि तानि स्युरितोऽन्तरित्थम्** । इत्थमिति वेत्रस्य पुरः पश्चाच्चलनप्रकारानुवादः । पश्चाच्च ऽनेनान्तरावृत्तिर्नियम्यत इव ।

**औपाधिकेभ्यः** । अन्याधीनभोग्यत्वेभ्यः । औपाधिकभोग्येभ्यः । न स्वतो भोग्यत्वं विषयाणाम् । भगवत्सङ्कल्पादेव तेषां भोग्यत्वम् । 'आत्मनस्तु कामाय सर्वं प्रियं भवति ।'

**निरुपाधिभोग्ये** । अनन्याधीनभोग्यत्वं ब्रह्मणः । स्वत आनन्दत्वं तस्य ।

**प्रत्याहरद्वेत्रवरम्** । प्रतिहारभूमिस्थितो वेत्रदण्डी इन्द्रियप्रत्याहारं नियमयति ।

**भजामि** । भयेन निरन्तरस्मरणम् । तद्भयेन प्रत्याह्रियन्ते खानि बहिर्विषयेभ्यः ॥

शेषशयलोचनामृतनदीरयाकुलितलोलमानानाम् ।
आलम्बमिवामोदस्तम्भद्वयमन्तरङ्गमभियामः ॥ ५९ ॥

प्रत्याहारे कृते, प्रत्याहृतेष्विन्द्रियेषु 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इत्युक्तरीत्या प्रत्यगात्मदर्शनं लभ्येत । अस्मिन्नाश्रितजने कटाक्षाः पतन्ति । कटाक्षा अमृतनदीप्रवाहत्वेनातिवेगं निर्गच्छन्ति । तत्प्रवाहवेगेन मज्जिता अवलम्बं मृगयामहे । तत्प्रवाहमध्यवर्त्यन्तरङ्गोऽवलम्बोऽपेक्ष्यते । स्तम्भद्वयं चावलम्बीभवति । अन्तर्हृदयेन्द्रियाणामन्तरङ्गाणामस्माकमन्तरङ्गौ आमोदस्तम्भाववलम्बनं भवतः । अन्तश्चक्षुषामन्तरङ्गोऽवलम्ब उचितः ।

**शेषशयलोचनामृतनदीरयाकुलितलोलमानानाम्** । अमृतत्वप्रवाहे मज्जयित्रीयममृतसरित् । श्रुतिस्थामृतत्वशब्दप्रत्यभिज्ञापनमिवामृतनदीशब्देन । दयासरिद्वेगाकुलिता लोलायिताश्च वयम् ।

**आमोदस्तम्भद्वयम्** । अतिवेगेनैकस्मात्स्तम्भात् भ्रंशे स्तम्भान्तरमस्त्यवलम्बनाय ।

**अन्तरङ्गमालम्बमिव** । (स्थितम्)

**अभियामः** । अभिगच्छामः । अभिगमनशब्दः प्रतिपत्तिविशेषद्योतकः ॥

**श्रीरङ्गान्तर्मन्दिरं दीप्रशेषं श्रीभूमीतद्रम्यजामातृगर्भम् ।**
**पश्येम श्रीदिव्यमाणिक्यभूषामञ्जूषायास्तुल्यमुन्मीलितायाः ॥ ६० ॥**

प्रत्याहृतकरणानामन्तर्दृष्टीनामन्तर्मन्दिरमन्तर्माणिक्यगर्भोन्मीलिता मञ्जूषेवाभाति ।

**श्रीरङ्गान्तर्मन्दिरम्** । गर्भगृहमिति प्रख्यातम् ।

**दीप्रशेषम्** । बद्धरत्नैः शिरोभिर्दीप्रो जाज्वल्यमानः शेषः । तेन दीप्रमुज्ज्वलम् ।

**श्रीभूमीतद्रम्यजामातृगर्भम्** । अन्तर्मन्दिरं गर्भगृहमित्युक्तम् । किं तद्गर्भ इति पृष्टे उच्यते स्त्रीरत्नादिगर्भमिति । श्रीर्नारीणामुत्तमा वधूर्जगन्माता सर्वाश्रयभूता । भूमिर्विश्वम्भरा या विश्वं स्वगर्भे धत्ते । साऽस्य गर्भ इत्य-

द्भुतरसानुभवः । रम्यजामाता रङ्गराजः प्रसिद्धस्तत्पदार्थः । स च रम्य-जामाता च तद्रम्यजामाता । यद्वा यथा जना एनं जामातृबुद्ध्याऽनुभवन्ति मैथिलजनवत्तथेमे पत्न्यावपि जामातृत्वेनानुभवन्ति । वध्वोः खलु वरः । जामातृवदाद्रियते वधूभ्यां विष्णुः । विष्णुः खलु जामाता । जामाता वि-ष्णुवत् पूज्यः । तद्रम्यजामातेति श्रीभूम्यो रम्यजामाता । तस्य तज्जामातृ-त्वानुपपत्तौ जामातृवदादरणीयत्वमात्रं लक्ष्यते । आदरस्य निरतिशयत्वद्योतने तात्पर्यम् । नित्यवधूवरगर्भमिदं मन्दिरम् । नित्यकल्याणवत्त्वं व्यज्यते । यथा प्रणवो वधूवरगर्भस्तथा प्रणवविमानम् ।

**उन्मीलितायाः श्रीदिव्यमाणिक्यभूषामञ्जूषायाः ।** न केव-लं दिव्यदम्पतिगर्भम् । कौस्तुभरत्नगर्भं च । तद्रत्नं विना प्रणवत्वं न स्यात् । दिव्यमाणिक्येति मकारार्थभूतज्ञानमयस्वयंप्रकाशजीवरत्नग्रहणम् । मकारार्थ-सन्निकर्षाय मकारादिमाणिक्यनामग्रहणमिति विभाव्यम् । मकारार्थजीवसमु-दायद्योतनाय तद्रत्नमञ्जूषासादृश्यवर्णनम् । कस्या इयं मञ्जूषा ? श्रीदेव्या मञ्जूषेयम् । श्रियो मञ्जूषा । श्रीश्चेदवश्यं कोशमञ्जूषाद्यपेक्षा । रङ्गकोशः श्रियः कोशः । तस्मिन्कोशे नायकरत्नम् , श्रीः रत्नगर्भा वसुन्धरा ; जीवरत्ना-नि च सन्ति । श्रियः कोशे श्रियोऽप्यवस्थितिरावश्यकी । रत्नपेटिकाया उ-द्घाटितकवाटत्व एवान्तःस्थितोत्तमरत्नदर्शनं स्यात् । प्रणवे लयाणामपि स्फुटं दर्शनम् । उन्मीलितत्वं स्फुटत्वोपपादकम् । परस्य ब्रह्मणो रूपं शेषित्वं स्फु-टमीक्ष्यते । मञ्जूषायां मरकतमिवेत्यन्यत्र ।

**पश्येम ।** दृशां प्रयोजनं लभेमहि ॥

**लीलालताकृपाणीभृङ्गारपतद्ग्रहार्पितकराग्राः ।**
**प्रीतावतंसितकुचाः पदाब्जसंवाहिनीर्वयं स्तुमहे ॥ ६१ ॥**

पादाब्जसंवाहिन्यो वर्ण्यन्ते । तासां कराग्रेषु लता, कृपाणी; स्वर्णपात्रम्, कलाची च भवन्ति । लीलाशब्दः प्रत्येकमन्वेति । तत्कुचा अवतंसिताः ।

अब्जसंवाहनयोग्यतालाभाय लतावतंसादिसाहचर्यवर्णनम् ।

**मुकुलितनलिनाः सकौमुदीका इव सुनिशाविमलादिका नवापि ।**
**शिरसि कृतनमस्यदेकहस्ता इतरकरोच्चलचामराः श्रयेयम् ॥ ६२ ॥**

विमलादिका नव परिचारिकाः प्रणम्यन्ते । आनन्देनार्धनिमीलिते लोचने । तदुच्यते मुकुलितनलिना इति । परिचरणरूपसेवायां निरतिशयानन्दानुभवो व्यज्यते । श्रीरङ्गचन्द्रमसः सन्निधौ तन्नयनाब्जानि मुकुलितानि । नयनाब्जमुकुलनोपपादनं सकौमुदीका इति । सुनिशानाम्नोऽन्वर्थत्वोपपादनं सकौमुदीकत्ववर्णनेन । कृतनमस्यदेकहस्तत्वमुकुलितनलिनत्वयोः उच्चलचामरत्वसकौमुदीकत्वयोश्च बिम्बप्रतिबिम्बभावः ।

**शिरसि कृतनमस्यदेकहस्ता इतरकरोच्चलचामराः** । एकहस्तकृताञ्जलिनिषेधो नात्र प्रसरेत् । अन्यस्य हस्तस्य कैङ्कर्यव्यापृतत्वात् । प्रवृत्तस्यानुज्ञाकैङ्कर्यस्य प्राधान्यम् । बद्धाञ्जलिपुटा हृष्टाः सत्कुर्वत्य इमाश्चामरग्राहिण्यः ।

**श्रयेयम्** । भृत्याया भृत्यो भवेयम् ॥

**उत्फुल्लपङ्कजतटाकमिवोपयानि**
**श्रीरङ्गराजमिह दक्षिणसव्यसीम्नोः ।**
**लक्ष्मीं विहाररसिकामिव राजहंसीं**
**छायामिवाभ्युदयिनीमवनीं च तस्याः ॥ ६३ ॥**

गद्यमश्लोकोऽयं पूर्वशतकस्य । अत्र श्रीभूमीसहितश्रीरङ्गराजस्य प्रथमदर्शनम् । दिव्यविग्रहस्य समुदायानुभवो नक्षत्रसंख्यैः श्लोकैः । अनन्तरमामौलेः आ च पादादनुभवः । 'एष ब्रह्म प्रविष्टोऽसि ग्रीष्मे शीतमिव ह्रदम्' इति ब्रह्मावगाहे आर्षः शीततानुभवः । शीतो ह्रदः पद्मवान् स्यात् । राजहंसी च तत्र विहरेत् । राजहंसभूतस्य रङ्गराजस्यैव तटाकत्वान्न हंसस्य पृथक्कीर्तनमिति रसिकैर्भाव्यम् । अयमेव नाथ आरामश्च भवति नायकयोः ।

मुकुलिताब्जनयनप्रस्तावः कृतः पूर्वश्लोके । अत्रोत्फुल्लपङ्कजवत्तटाकानुभवः ।

**उत्फुल्लपङ्कजतटाकमिव** । पुण्डरीकोपमितस्वाक्षिणी, स्वमुखकरपादाब्जानि च पङ्कजानि श्रीरङ्गराजह्रदे । 'भवार्तानां वक्त्रामृतसरसि' इति वक्त्रमात्रस्यामृतसरस्त्ववर्णनमुत्तरत्र । अत्र कृत्स्नविग्रहस्य पद्मिनीत्वानुभवः । 'साभिप्रायस्मितविकसितम्' इति प्रणयिजनाभिमुख्यवात्सल्यादिद्योतकमुत्फुल्लत्वं विकसितत्वम् ।

**उपयानि** । अभिगम्यत्वेन, भोग्यत्वेन; सर्वतापहरत्वेनोपसर्पदियम् ।

**श्रीरङ्गराजमिह** । स एव तटाकः । यदि राजहंसकीर्तनापेक्षा नामैकदेशे नामग्रहणमिति राजशब्देन राजहंसस्मारणं भवेत् ।

**दक्षिणसव्यसीम्नोः** । अयं तटाकः । अयमेव हंसः । अस्योभयपार्श्वयोर्हंस्यौ ।

**लक्ष्मीं विहाररसिकामिव राजहंसीम्** । हंसमिथुनं विहरेत् । अत्र हंसीमिथुनं सपत्नीमिथुनं नायकतटाके विहरति ।

**छायामिवाभ्युदयिनीमवनीं च तस्याः** । कथमिदं सम्भवेत्सपत्न्योर्मिथो नाथतटाके विहरणमिति ? नानयोर्द्वेधकरं सापत्न्यम् । किं तु छायाच्छायिनोरिवाभेदघटितम् । लक्ष्म्याश्छायेयं भूमिः । तद्विभूतिरियं तत्कान्तिप्रतिबिम्ब इव । यथा श्रीरङ्गराजस्य छाया प्रभा लक्ष्मीस्तथेयं तस्याश्छायेव । महानभ्युदयो हर्ष उत्सवो लक्ष्म्या इयम् । तस्या अवनी रक्षिकेयमिति तस्यामभिमानः । अत्रावनीशब्दो योगरूढः । तस्या अवनीति यौगिकार्थग्रहणेऽस्ति स्वारस्यम् ॥

**पिब नयन पुरस्ते रङ्गधुर्याभिधानं**
**स्थितमिव परिफुल्लत्पुण्डरीकं तटाकम् ।**
**श्रियमपि विहरन्तीं राजहंसीमिवास्मि-**
**न्प्रतिफलनमिवास्याः पश्य विश्वम्भरां च ॥ ६४ ॥**

यद्यप्यत्र पूर्वश्लोकोक्तस्य पुनरुक्तिरिव । अभ्यासातिशयात् प्रथमानुभूतस्या-भ्यासेनादरेण धारणं क्रियते । 'आदरादलोपः' । पुनरुक्तिरूपाभ्यासं विना न धारणादिसम्भवः । पूर्वमुपयानीति ब्रह्मतटाकसमीपगमनमादिष्टं स्वात्मानं प्रति वकुलभूषणप्रदर्शितमार्गमनुसृत्य । उपसदनं वृत्तम् । इदानीं दर्शनपा-नास्वादनाद्यादिश्यते ।

**नयन** । एकवचनोक्तिर्द्रष्टव्यविषयैक्यं नियमयतीव । द्रष्टव्यविषय-द्वैधं माऽस्तु यद्यपि द्रष्टृणी द्वे लोचने ।

**पिब** । अस्मिंस्तटाकरूपार्चाविग्रहे नावगाहनोक्तिसम्भवः । लोचना-भ्यां पानमेव सम्भवि । मुखेन जिह्वाताल्वादिना मुख्यं पानमसम्भवि । 'लोचनाभ्यां पिबन्निव' इति नयनयोः पानमादिश्यते । 'त्वक् च दृक्च निपिपासति । ' तृषार्तेन प्रथमं पानादेशनं क्रियते । तन्मात्रोक्तौ जिह्वादे-स्तत्र प्रवृत्तिर्भवेत् ; तद्व्यावर्त्यते नयनसम्बोधनेन ।

**पुरस्ते रङ्गधुर्याभिधानम्** । नायं रङ्गधुर्यः पुरुषः । किं त्वयं त-टाकः । नाममात्रमस्य रङ्गधुर्येति । एवं निर्गीर्योक्तिः ।

**स्थितमिव परिफुल्लत्पुण्डरीकं तटाकम्** । स्थावरो निर्विकारः सदैकरूपरूपो वृद्धिह्रासरहितस्तटाकः । नात्र पद्मानां कदाचिदपि निमील-नम् । स्थितं परिफुल्लत्वमत्रत्यपुण्डरीकाणाम् ।

**श्रियमपि विहरन्तीं राजहंसीमिवास्मिन्** । पद्मिनीं रङ्गराजं पिबेत्यादेशः । श्रियं राजहंसीं तच्छायामवनिं च पश्येत्यादिश्यते । देवी-विषये लोचनाभ्यां पानादेशो न न्याय्यः । अतो दर्शनमात्रमादिश्यते पश्येति ।

**प्रतिफलनमिवास्याः पश्य विश्वम्भरां च** । श्रियश्छाया वि-श्वम्भरा चेत्को वा तस्या महिमा । रङ्गधुरन्धरो रङ्गधुर्यो नाथः । अस्या-श्छाया तु विश्वधुरन्धरा ॥

**सौशील्यशीतलमवेलकृपोत्तरङ्ग-**
**संप्लावितखिलमकृत्रिमभूमिनिम्नम् ।**
**लक्ष्म्या च वासितमभूम विगाहमानाः**
**श्रीरंगराजमिषपद्मसरः प्रसन्नम् ॥ ६५ ॥**

यद्यपि वयं भीत्या श्रीरङ्गराजब्रह्मण्यवगाहनान्निवृत्ताः,परमोदारः सौशील्यभूमा सः स्वयं कृपातरङ्गैरस्मान्सम्प्लावयत्यवगाहयति । कृपाप्रवाहावगाहनं यद्यपि भवति, नास्मत्प्रयत्नेनास्मदिच्छया वा भवति । तद्युच्यते विगाहमाना अभूमेत्युक्त्या । स्थितं तटाकमिवेत्युक्तम् । तेन तरङ्गाभावः प्रसज्येत । तद्व्यावर्त्यते उद्वेलतरङ्गवत्त्वकथनेन ॥

**सौशील्यशीतलम्** । शीतमिव ह्रदमित्युक्तम् । शैत्यं च सौशील्यशीतवारिणेत्युच्यते । सौशील्यरसशीतोऽयं ह्रदः । प्रमाणोक्तं शैत्यमुपपाद्यते ।

**अवेलकृपोत्तरङ्गसंप्लाविताखिलम्** यद्यप्यहं दूरास्थितः वेलामुलंघ्य मामाप्लावयति ।

**अकृत्रिमभूमिनिम्नम्** । तटाकश्चेत्कृत्रिमनिम्नभूमौ स्यात् । कृत्रिमं खातनिम्नप्रदेशे स्यात् । स्वयंव्यक्तमिदं सरः ।

**लक्ष्म्या च वासितम्** । ईशावासितं जगत् । लक्ष्म्या वासितमीशसरः । यथेशात्मकं जगत्तेन धार्यते, तथा लक्ष्मीधार्यो भगवान् । 'न जीवेयं क्षणमपि विना तामसितेक्षणाम् ।' तया परिमलितमिदं पद्मसरः । सर्वगन्धस्यापीयं गन्धद्वारा दुराधर्षा ।

**श्रीरङ्गराजमिषपद्मसरः** । पद्मसरस्त्वमेव वास्तवम् ।

**प्रसन्नम्** । तच्च लक्ष्मीवासितत्वात् । इतरथा कलुषं भवेत् ॥

**सिंहासने कमलया क्षमया च विश्व-**
**मेकातपत्रयितुमस्मदसूंन्निषण्णम् ।**
**लक्ष्मीस्वयंवरसनाथितयौवनश्री-**
**सौन्दर्यसम्पदयलिप्तमिवालिहानि ॥ ६६ ॥**

पिब नयनेति नयनयोरनुभवः । विगाहमाना इति त्वाचानुभवः । जिह्वानुभवः प्रदर्श्यत इवालिहानेति । श्रीरङ्गराजमिषपद्मसर इति राजत्वं न वास्तवम् , सरस्त्वं वास्तवमित्युक्तम् । सरोरूपकासिद्ध्यर्थमुक्तं तथा कविरीत्या । परमार्थेन तद्वचो न गृह्यतामित्युच्यते राजत्वसमर्थकसिंहासनावस्थित्यादिग्रहणेन । एकाधिपत्यं समर्थ्यते ।

**सिंहासने कमलया क्षमया च निषण्णम्** । शेष एव सिंहासनं भवति । 'शरीरभेदैस्तव शेषतां गतैर्यथोचितम्–' इति तस्य सिंहासनभवनं प्रसिद्धम् । स एव शय्या । स एवासनम् । यथोचितं स्वाम्यभिमतानुसारेण तस्य शरीरभेदाः शेषतां गताः । 'रामं रत्नमये पीठे सहसीतं न्यवेशयन् ।' स्वयं व्यक्तः श्रीरङ्गनाथो न निवेशितः ; किं तु निषण्णः । श्रीरामावतारे भूम्याः श्वश्रूत्वाभिमानादेकदारव्रतत्वाच्च सीतयैकया सहासनम् । बहुवल्लभा राजान इति श्रीरङ्गराजो बहुवल्लभः । 'असूर्यमिव सूर्येण निवातमिव वायुना । कृष्णेन समुपेतेन जहृषे भारतं पुरम् ॥' इति सर्वासुनिलयः ।

**विश्वमेकातपत्रयितुम्** । यदि क्षमैव पत्नी विश्वस्य तद्वशत्वे कः सन्देहः ? क्षमापठनानन्तरं विश्वादिपठनमेतत्सूचयतीव ।

**अस्मदसून्** । अस्मत्प्राणाः श्रीरङ्गराजः । सिंहासनारूढोऽस्मत्प्राणाः । भक्तान् पाण्डवान् 'मम प्राणा हि पाण्डवाः' इत्यन्वर्थप्रतीत्या प्राणत्वेनाभिमनुते भगवान् । कृते च प्रतिकर्तव्यम् । वयं तं प्राणत्वेनाभिमन्वीमहि । 'प्राणा वै सत्यं तेषामेष सत्यम्' 'प्राणस्य प्राणः' इति तस्य विश्वप्राणत्वं प्रसिद्धम् । अस्मत्प्राणाः सिंहासनाधिरूढाश्चेत् तद्भाग्यमस्माकमेवेति कः सन्देहः । अस्मदसवः खलु सिंहासने निषण्णा इत्यस्मत्परमानन्दो व्यज्यतेऽस्मदसूनित्युक्त्या । 'ययौ वक्षःस्थलं हरेः' इति लक्ष्मीस्वयंवरप्रकरणे । हरेरिति हरिनामग्रहणं तस्य लक्ष्मीमनोहरशोभावत्त्वं सूचयति । निरपेक्षमी-

प्सितमिति तत्प्रकरणे शुकः । निरपेक्षो हरिरासीत् । तस्य निरपेक्षत्वादेवे-प्सितो हरिर्लक्ष्म्या । तस्य सापेक्षत्वप्रदर्शने स्वयंवरत्वहानिः । लक्ष्म्या स्व-यं वृतोऽयं हरिः । तां विनाऽस्य रङ्गनाथस्य यौवनश्रीरनाथा स्यादनुभवि-त्रभावात्काननचन्द्रिकावत् । 'नाथवन्तस्त्वया लोकास्त्वमनाथा विपर्यये' इतिवद्भवेत् । रङ्गनाथयौवनश्रियः श्रिया सनाथितत्वकथनेन तस्य नाथस्य नाथवत्त्वं भवेदिति द्योत्यते । यौवनमात्रग्रहणे तस्य नाथवत्त्ववर्णनास्वारस्यात् यौवनश्रीग्रहणम् । श्रिया सनाथीक्रियतेऽस्य यौवनश्रीः ।

**सौन्दर्यसम्पदवलिप्तमिव** । सौन्दर्यसम्पदस्यावलेपनमिव भवति । यौवनस्य श्रियश्चावलेपरूपगर्वोन्मादादिजनकत्वं सहजम् । अवलिप्तमिति सौन्दर्यावलेपेनावलिप्तमित्यपि भावः । तेन चावलेहनाशा जायेत । मध्वाद्य-वलिप्तस्यावलेहनं सम्भवि ।

**आलिहानि** । आस्वादयेयम् । तथा च ममार्तिः शाम्येत् । स्वस्या-तिनीचत्वानुसन्धानमपि भवेत् । ग्रामसिंहः सिंहासनस्थरङ्गयूनः सौन्दर्यश्रियं लिलिक्षति । किमिदं साहसम्? कोऽयं नाथगुणः? 'नाये'निति नैच्यद्योतक-द्राविडव्यवहारः स्मर्यते । 'शुना लीढाऽपि भागीरथी' इत्यादिकं स्मर्तव्यम् ॥

**आपादमूलमणिमौलि समुल्लसन्त्या**
**स्वातन्त्र्यसौहृदतरङ्गितयाऽङ्गभङ्ग्या ।**
**सख्यं समस्तजनचेतसि सन्दधानं**
**श्रीरङ्गराजमनिमेषमनुश्रयाम ॥ ६७ ॥**

अवलिप्तमित्युक्तम् । कथं यौवनावलिप्तस्यावलेहनादिसम्भवः । तत्समीपगमनादिसम्भवः प्रदर्श्यते तस्य सर्वभूतसुहृत्त्वप्रकाशनेन । 'सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति' इत्युक्तसर्वभूतसुहृत्त्वं प्रत्यङ्गं प्रदर्श्यत इव ।

**आपादमूलमणिमौलि** । आपीठान्मौलिपर्यन्तं स्वातन्त्र्यसौन्दर्य-

तरङ्गिततयोद्वेलं सौहार्दमाख्यान्तीवाङ्गानि । अङ्गभङ्गीति भंग्युक्तिस्तरङ्गानुकूला । स्वातन्त्र्यभासनं कथं विश्वासोपयोगीति चेत्—यद्यप्यशुद्धाः सर्वथासमा वयं न सख्यार्हाः, अस्मच्चेतसि सख्यं जनयत्यपर्यनुयोज्यस्वातन्त्र्यत्वादेव । सोऽस्मान् सुहृत्त्वेनाभिमनुते । प्रभुसम्मितवेदादिभिर्निषिद्धोऽपि स्वातन्त्र्यादेवासदयोग्यतामविगणय्यास्मासु स्निह्यति । अतः स्वातन्त्र्यप्रकाशो विश्वासजनकः । तत्स्वातन्त्र्यं विना नास्माकं तत्सख्यलाभः ।

**सख्यं समस्तजनचेतसि सन्दधानम्** । स्वकीयनिरतिशयसौहार्दप्रकाशः अस्मच्चेतसि तस्मिन् सख्यमुत्पादयति । सुहृदं सर्वभूतानामिति स एव स्वस्य सौहृदं स्वयं प्रख्यापयति । सर्वपदस्थाने समस्तेति । भूतस्थाने जनशब्दः । सख्यमात्मनिवेदनमिति सख्योत्पादने ते स्वयमात्मनिवेदनं कुर्युः । सख्यं सन्दधानमिति नाथ एव प्रथमं प्रवर्तते सख्यकरणविषय इति द्योत्यते । यद्यपि चेतनाः प्रणवधनुषि चेतःशरसन्धानं न कुर्वते, ईश्वरः स्वयं तच्चेतसि सख्यं सन्धत्ते ।

**श्रीरङ्गराजम्** । राजत्वेऽप्यस्य सख्यादौ प्रथमप्रवृत्तिरिति विस्मयकारणम् ।

**अनिमेषमनुश्रयाम** । सदा पश्येम निर्निमेषा नित्यसूरिवत् ॥

**क्षितिकमलनिवासाकल्पवल्लीसलीलो-**
**ल्लुठनदशादिशोद्यद्यौवनारम्भजृम्भः ।**
**श्रममपहरतां मे रङ्गधामेति तत्त-**
**द्वरमयफलनम्रः पत्रलः पारिजातः ॥ ६८ ॥**

यद्यपि वयं नम्रा न भवामः ; स नम्रो भवति । 'भवन्ति नम्रास्तरवः फलोद्गमैः ।' फलभरं वहंस्तेन नम्रो भवति । तापत्रयविरचितधर्मगाढतप्तेभ्योऽयं शीतलच्छायां ददाति । एतत्सर्वसिद्धये पारिजातवृक्षत्वेनानुभवः ।

क्षितिकमलनिवासाकल्पवल्लीसलीलोल्लुठनदशादिशोद्यद्यौव-

**नारम्भजृम्भः** । क्षितिकल्पवल्ली ; लक्ष्मीकल्पवल्लीति वल्लीद्वयाश्रितयुवपारिजातः । 'चूतेन सङ्गतवती नवमालिकेयम्' इतिवत्कल्पवल्लीसङ्गतपारिजातोऽयम् । साश्रया लताः प्रमदाश्च शोभन्ते । अयं पारिजात आश्रितलताभ्यां शोभते । 'कलशजलधिकन्यावल्लरीकल्पशाखी' इति श्रीवरदराज विषये वेदान्ताचार्याः । देवतरुषु कल्पतरुपारिजातौ पठ्येते । उभौ देवजातीयौ । देवत्वे समानेऽपि मिथो गोत्रभेदोऽस्ति येन परिणययोग्यता भवति । 'आहो वराहवपुषः परिरम्भणेन' इति परिरम्भणरसरसिका गोप्यो भूदेवीपरिष्वङ्गमुत्प्रेक्षयन्ति । प्रभू रङ्गमन्दिरान्तरास्ते । तस्य यौवनप्रारम्भजृम्भणे कथं दशसु दिक्षु यौवनस्य जृम्भणमिति चेदत्र द्वेधा समाधिः । ब्रह्मणो यौवनं दिगन्तव्याप्तं भवेत् ब्रह्मणो यौवनत्वात् । ब्रह्मणो युवत्वप्रारम्भे जृम्भमाणे तत्साम्ययोग्यास्तत्साम्यवहनप्रेप्सवः सर्वेऽपि युवानो भवन्ति । 'चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः' इत्यार्षानुभवः स्मर्तव्यः ।

**रङ्गधामेति** । रूढनाममात्रमस्य रङ्गधामेति । वस्तुतोऽयं स्वर्गधामा पारिजातः ।

**श्रममपहरतां मे** । मच्छ्रमापहरणफलं तस्यैवेति द्योत्यते आत्मनेपदेन ।

> **सम्भाषमाणमिव सर्ववशंवदेन**
> **मन्दस्मितेन मधुरेण च वीक्षणेन ।**
> **दिव्यास्त्रपुष्पितचतुर्भुजमत्युदारं**
> **रङ्गाश्रयं मम शुभाश्रयमाश्रयाणि ॥ ६९ ॥**

पारिजातत्वेन रूपणं कृतम् । अर्चविग्रहो भगवान् स्थावरपारिजातवन्मूक इति भवद्भिस्तद्रूपणं कृतं किमिति पृष्टे वदति । भाषतेऽयं, सम्यक् च भाषते । 'स्मितपूर्वाभिभाषी' राघव इति ऋषिः । तदाराध्योऽयं स्मितेन भाषते मौननियमात् ।

**सर्ववशंवदेनमन्दस्मितेन मधुरेण च वीक्षणेन** । 'मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शनं निरीक्षणैः' इति श्रीवेदव्यासमुनिविषये प्रोक्ता

भारावित्रश्लोक उदाहृत आचार्यैः सहस्रनामभाष्ये। तच्छ्लोकानुभवस्मरणं मधुरेण वीक्षणेनेति। क्रूरसत्त्वान्यपि वशीक्रियेरन्नस्य मधुरेण वीक्षणेन। सर्वोति 'त्वं मेऽहं मे' इति प्रतियोद्धारः कौतस्कुता नास्तिका अपि वशं नीयेरन्निति द्योत्यते।

**दिव्यास्त्रपुष्पितचतुर्भुजम्**। अत्युदारस्यास्य विषये पारिजातवृक्षस्वरूपणपरित्यागो न न्याय्यः। तदप्यनुवर्तयिष्यामः। अयं पुष्पितशाखाचतुष्टययुक्तो वासुदेवतरुः। शाखासु पुष्पाणीव दृश्यन्ते दिव्यास्त्राणि भुजशाखासु। प्रतिकूलेषु घातकतया क्षिप्यमाणानि तीक्ष्णतीक्ष्णान्यस्त्राणि अनुकूलेषु पुष्पाणीव क्षेप्तुं योग्यानि भवन्तीति व्यज्यते 'अस्त्रपुष्पितमिति'। भीषणतमान्यस्त्राणि पुष्पवत्सुदर्शनान्यनुभाव्यानि भवन्ति भक्तानाम्। 'शत्रूणामप्रकम्प्योऽपि लघुत्वमगमत्कपेः।' इति स्वभावोऽनुगम्यते चेतनैर्भगवदस्त्रैः। मूर्च्छाक्रान्तलक्ष्मणस्य शरीरस्य तादृशः स्वभावोऽवर्ण्यत ऋषिणा। ज्वालामालभारि चक्रं पुष्पवत्सुदर्शं सुदर्शनं भवति भक्तानामिति व्यञ्जेन तात्पर्यमिव। भगवत्सारूप्यभाग्भिर्भक्तैः शाखाभ्यो यथेष्टमपचाय्य स्वैरापि पुष्पवद्धारयितुं योग्यानीमान्यस्त्राणीत्यपि व्यज्यते। एवमेवात्युदारत्वं निरुह्यत।

न पृथग्भूतानामायुधानां भुजेषु निवेशः। अपृथक्सिद्धानीमानीति।

**अत्युदारम्**। चतुर्भुजमित्युक्तम्। 'चतुर्णां पुरुषार्थानां दाता नोऽस्तु चतुर्भुजः।' इति रसिका आलङ्कारिकाः। चतुर्विधा भजन्ते मामिति स्वेनोक्तम्। तत्प्रकरणे 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' 'उदाराः सर्व एवैते' इति अत्यर्थप्रियत्वेनोदारत्वेन च श्लाघ्यन्तेऽर्थिनः। तादृशस्य परमोदारस्यात्युदारत्वेन वर्णनमेवोचितमिति भावः। अत्यर्थमुदारम्। 'अतीव प्रियदर्शनम्' इतिवत्।

**रङ्गाश्रयं मम शुभाश्रयमाश्रयाणि**। मम शुभाश्रयरूपाश्रयं स-

म्पादयितुमयं रङ्गमाश्रयत इवेति व्यज्यते ॥

**एते शङ्खगदासुदर्शनभृतः क्षेमङ्करा बाहवः**
**पादद्वन्द्वमिदं शरण्यमभयं भद्रं च वो हे जनाः ।**
**इत्यूचिष्यभयङ्करे करतले स्मेरेण वक्त्रेण त-**
**द्व्याकुर्वन्निव निर्वहेन्मम धुरं श्रीरङ्गसर्वंसहः ॥ ७० ॥**

सम्भाषत इत्युक्तम् । किं भाषते, कथं च भुजैर्भाषणे उपकार इति चोच्यते । करतलस्याभयवक्तृत्वं चोच्यते । त्रिषु बाहुष्वायुधाः ।

**इत्यूचिष्यभयङ्करे ।** अभयंकरं करतलमपि सम्भाषते न केवलं वक्त्रम् ; 'पश्यत्यचक्षुः' इति न करणायत्तकरणव्यापारोऽयम् । करतलेनापि भाषते । स्वस्याभयङ्करत्वेऽपि पादद्वन्द्वमभयं शरण्यमिति प्रदर्शयति करतलम् । किमेतदुच्चैष्ट्वम् ? स्वयमभयङ्करेण इतरस्याभयत्वेन प्रदर्शनं विस्मयकरम् । बाहूनां क्षेमङ्करत्वेऽपि पादद्वन्द्वस्य भद्रत्वेन प्रदर्शनं करतलेन । भद्रमिति क्षेमङ्करत्वम् । इतीति सम्भाषणप्रकारोक्तिः । हे इति दूरस्थानामप्युच्चैराह्वानं सूच्यते । प्लुतेनाह्वयतीव मौननियममपि भंक्त्वा ।

**स्मेरेण वक्त्रेण तद्व्याकुर्वन्निव ।** करतलोक्तं व्याकरोति विशदयति सस्मितं मुखम् । वक्त्रं भाष्यकर्तृ भवति ।

**श्रीरङ्गसर्वंसहः ।** एवं स्थितः सर्वधुरन्धरो ध्रुवं मद्धुरां निर्वहेत् ।

**मम धुरं निर्वहेत् ।** मद्योगक्षेमं निर्वहेत् । यद्यप्यपारकरुणया 'योगक्षेमं वहाम्यहम्' इति स वहनं प्रतिजानीते निर्वहत्वित्येव वयं वदामः । न वहत्विति । अनुपसृष्टवहामिशब्दस्य निर्वहामि इत्यर्थं वर्णयामः, उपसर्गाणां द्योतकत्वात् ॥

**अङ्गैरहंप्रथमिकाचरितात्मदानै-**
**रामोदमाननवयौवनसावलेपैः ।**

**हे पारिजातमिव नूतनतायमान-**
**शाखाशतं कथमधीमहि रङ्गधुर्यम् ॥ ७१ ॥**

करतलस्य भाषणेऽहंप्रथमिका वर्णिता । सर्वेषामङ्गानामात्मदानेऽहंप्रथमिका वर्ण्यते । न केवलमाश्रयिणः पूर्वमेवाहं प्रथमं सम्भाषणादिकं कुर्यामिति मनोरथः । एकैकेनाङ्गेन इतरेभ्योऽङ्गेभ्योऽपि प्राथमिकत्वमिष्यते आश्रितलालने इति व्यज्यते ।

है । हे इति करतलम् । हे इत्याचार्याः ।

**आमोदमाननवयौवनसावलेपैः** । नवयौवनेन प्रमोदाधानम् ; परिमलाधानं च । रम्यजामातुः परिमलरङ्गस्योभयमप्यावश्यकम् । 'कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्' इति महाकविः शकुन्तलाविषये । नवकुसुमस्य सौरभ्यमपि । न सौन्दर्यमात्रम् । लोभनीयत्वं न सौन्दर्यमात्रेण । किं तूद्यत्परिमलेनापीति भावः प्रदर्श्यत इवाचार्यैः । नवयौवनस्य सावलेपत्वमपरिहार्यम् । शुद्धसत्त्वमूर्तौ रजोगुणभूतस्यावलेपस्यावकाशः कथमिति चेत्—आत्मदानेऽहंप्रथमिकासंरम्भरूपावलेपो न दोषाय ; प्रत्युत महते गुणाय भवेत् ।

**अहंप्रथमिकाचरितात्मदानैरङ्गैः** । 'य आत्मदाः' 'स्मरतः पादकमलमात्मानमपि यच्छति' इत्यात्मदानं स्वभावो भगवतः । यदात्मको यत्स्वभावो भगवांस्तदात्मिका शुद्धसत्त्वमयी भगवद्व्यक्तिरूपतद्दिव्यतनुः । भगवत्स्वभावमनुकुर्वते तदङ्गानि । आत्मदाने भगवत्पूर्वत्वमपीष्यत इव तैः । भगवतोऽपि तेषां स्पर्धा तद्विषये । न केवलं मिथः स्पर्धा । भगवत्तोऽपि पूर्वत्वमिष्यते । आत्मसमर्पणं करोतु वा मा वाऽऽश्रयिजनः । वयं तस्मा आत्मसमर्पणमाचरामेति मनोरथ इव । आश्रितकरिष्यमाणात्मदानात्पूर्वत्वमपीष्यते । सर्वापेक्षया प्रथमत्वमनोरथः । आचरितेति 'स्वयमाचरते यस्मात्तमाचार्यं प्रचक्षते' इत्यात्मसमर्पणधर्मोपदेशेनाचार्यकं वहन्तीति व्यज्यते ।

प्रथमगुरोरङ्गानि खलु तानि ।

**नूतनतायमानशाखाशतं पारिजातम्** । यौवनप्रादुर्भावे न केवलं शाखासु नवनवकुसुमानि ; नवनवाः शाखा अपि प्रादुर्भवन्ति । सर्वजनसंग्रहणाय शाखाशतप्रादुर्भावः । तन्यमानेत्युक्ते विवक्षितदैर्घ्यानुरोधो न लभ्येत । अतस्तायमानेति वैकल्पिकदीर्घरूपाश्रयणम् ।

**रङ्गधुर्यं कथमधीमहि** । प्रणवधुर्यस्य रङ्गधुर्यस्य शाखोपशाखास्वमुचितम् । तद्विषयेऽधीमहीत्युक्तिर्न्याय्या । शाखाधिक्येऽध्ययनं दुष्करं स्यात् । बाल्ये एवाध्ययनं क्षमम् । नूतनं नूतनं शाखासु प्ररोहन्तीषु कथमध्ययनस्य शक्यता । कथमिति तद्दुष्करताद्योतनम् ॥

> **आलोका हृदयालवो रसवशादीशानमीषत्स्मितं**
> **प्रच्छायानि वचांसि पद्मनिलयाचेतःशरण्यं वपुः ।**
> **चक्षुष्मन्ति गतागतानि त इमे श्रीरङ्गशृङ्गार ते**
> **भावा यौवनगन्धिनः किमपरं सिञ्चन्ति चेतांसि नः॥ ७२॥**

लावण्यजलधिरित्युक्तलावण्यजलधौ 'तमिमं गुणसागरम्––' इति दहराधिकरणभाष्योक्तगुणसागरे मग्नो भवत्याचार्यः । परिच्छेदातीतोऽयमनुभवः । अस्य परमोदारस्य स्वागतोपचारादिरीतिर्वर्ण्यते ।

**आलोका हृदयालवः** । यद्यप्ययं निद्रालुः, अस्यालोका हृदयालवः । दयालोरालोका हृदयालवः । आकेकराण्यस्य विलोकितानि ।

**रसवशादीशानमीषत्स्मितम्** । अस्येशानत्वं रसवशेन ; न भयेन निर्बन्धेन वा । स्मितमात्रेण वयं रसवशेन दास्यमुपगच्छामः । 'गुणैर्दास्यमुपागतः' इतिवत् नानेकगुणसमुदायापेक्षा दासीकरणाय । स्मितपदेनैवेषत्त्वलाभेऽप्यधिकेषत्त्वायेषद्ग्रहणम् । अत्यन्तालसस्मितेनापि वयं जिताः । स्मितेनेशानत्वम्; नाट्टहासेन । अट्टहासे भयेनेशानत्वं भवेत् ।

**प्रच्छायानि वचांसि** । 'तरुच्छाया तोयम्—' इति वाचा वृक्ष-

च्छायां दिशेयुर्वनदेवताः । अस्य देवदेवस्य वचांस्येव प्रच्छायानि सर्वतापहराणि । वासुदेवतरोर्वचांसि प्रच्छायानि । भाषमाणे छायातरौ वचांस्येव छायादायीनि भवेयुः ।

**पद्मनिलयाचेतःशरव्यं वपुः** । 'नारीणामुत्तमा वधू'र्लक्ष्मीः । तस्या अपि कमनीयमिदम् । तस्याश्चेतो वेध्यं लक्ष्यं भगवद्वपुषः । पद्मनिलयाचेतसः शरव्यं तद्वपुरिति वा । पद्मनिलया निवासभूतपद्मिनीं विहायोत्फुल्लपङ्कजतटाके भगवद्वपुषि चेतः प्रक्षिप्य तन्मयी भवतीति व्यज्यते ।

**चक्षुष्मन्ति गतागतानि** । 'रामं मेऽनुगता दृष्टिः' । 'मम चक्षुषी शंखेन, चक्रेण ; अरविन्दाक्षिभ्यां च गच्छतः' इति वकुलभूषणाः । अनुगतद्रष्टृचक्षुर्युक्तानि गतागतानि । गतागतरूपसञ्चाराणां नान्ध्यम् । 'चक्षुष्मता अन्धा इव नीयमानाः' इति चक्षुष्मताज्ञान्धनयनोक्तिः 'अन्धेनैव नीयमाना यथान्धाः' इत्युक्तान्धकर्तृकनयनवैजात्यप्रदर्शनाय । यदि गतागतमेव चक्षुष्मद्भवेन्न नेतुश्चक्षुष्मत्त्वाद्यपेक्षा । निद्राणस्य निमीलितनयनस्याप्यस्य गतागतानि चक्षुष्मन्ति । उत्सवमूर्तेः प्रसिद्धमनोनयनहारिसलीलगतागतादिविहारा अत्राभिप्रेताः । उभयोरभेदात् । आलोका हृदयालव इति प्रथममुक्तम् । किमर्थं चक्षुःपर्यन्तधावनम् ? गतागतान्येव विचित्रं कटाक्षयन्तीवेति भावः । गतागतैर्नीयामहे वयं निमीलितनयना आनन्दजडाः । भगवद्गतागतमेवास्मच्चक्षुर्भवति । अतो न स्खलामः ।

**श्रीरङ्गशृङ्गार** । शृङ्गं कामोद्रेकमृच्छतीति शृङ्गारः । स्वानुभवपूर्तिद्योतकसंबोधनम् । वेदशृङ्गं प्रणवः । तन्निवासस्य शृङ्गारत्वमुचितम् । 'अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम्' इति श्रीवेङ्कटेशविषये श्रीरङ्गरामानुजमुनयः ।

**ते भावा यौवनगन्धिनः** । यौवनविलासपूर्णाः । 'सर्वगन्धस्य भावाः खलु' । तेषां गन्धित्वमुचितम् ।

**किमपरम्** । किमपरं वाच्यम् ।

**सिञ्चन्ति चेतांसि नः** । कुलिशकठोराणि शुष्कशुष्काण्यस्मद्धृदयान्यार्द्रीकुर्वन्ति ॥

**आयत्किरीटमलिकोल्लसदूर्ध्वपुण्ड्र-**
**माकर्णलोचनमनङ्कुशकर्णपाशम् ।**
**उत्फुल्लवक्षसमुदायुधबाहुमञ्च-**
**न्नीविं च रङ्गपतिमब्जपदं भजामः ॥ ७३ ॥**

भगवदनुभवे मज्जनं प्रस्तुतम् । तत्र मज्जतां शठकोपादीनां रीतिरनुस्त्रियते । मज्जद्भिर्मज्जन्तो नीयन्ते । विलासवीक्षणादिकमुक्तम् । किरीटादिभिरलंकृतत्वमनुभूयते ।

**आयत्किरीटम्** । आयामवत्किरीटम् । किरीटा उपगच्छन्त्यचिन्त्यस्य शिरसि स्थितिं लभमर्हाति । इतरेषां शिरसि स्थितावस्य चरणस्पर्शमात्रं लभ्येत ।

**अलिकोल्लसदूर्ध्वपुण्ड्रम्** । अष्टमीचन्द्रसदृशे ललाटे ऊर्ध्वपुण्ड्रं विलसति ।

**आकर्णलोचनम्** । कर्णान्तविश्रान्ते लोचने ।

**अनङ्कुशकर्णपाशम्** । लोचनयोः कर्णाववधिः । 'दिशः श्रोत्र'मिति वर्णितयोः श्रोत्रयोर्नावधिः । 'चक्षुषी चन्द्रसूर्यै' । चन्द्रसूर्ययोर्नेत्रयोरस्ति दिग्रूपोऽवधिः ।

**उत्फुल्लवक्षसम्** । पद्मालंकृतवक्षः उत्फुल्लमिव भासते ।

**उदायुधबाहुम्** । शार्ङ्गगदाद्युदायुधमितिवत् ।

**अञ्चन्नीविं च** । द्योतमाननीविम् ।

**अब्जपदम्** । अरविन्दचरणम् ।

रङ्गपतिं भजामः । निरन्तरं भावयामः ।

अब्जन्यस्तपदाब्जमञ्चितकटीसंवादिकौशेयकं
किंचित्ताण्डवगन्धिसंहननकं निर्व्याजमन्दस्मितम् ।
चूडाचुम्बिमुखाम्बुजं निजभुजाविश्रान्तदिव्यायुधं
श्रीरङ्गे शरदः शतं तत इतः पश्येम लक्ष्मीसखम् ॥ ७४ ॥

भगवदनुभवे मज्जनं प्रस्तुतम् । तत्र मज्जनप्रवीणानां शठकोपादीनां रीतिरनुस्रियते । अब्जपदमित्युक्तं पूर्वश्लोकान्ते । अब्जे पदाब्जं विन्यस्तम् ।

**अब्जन्यस्तपदाब्जम्** । सुन्दरबाह्वनुभवगाथाः स्मार्यन्ते । पूर्वश्लोके आशीर्षादनुभवः । अत्रापीठान्मौलिपर्यन्तम् । अब्जेऽब्जन्यासः । अनब्जस्य पदस्य पद्मे निवेशने ध्रुवमनौचित्यम् । 'नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा मूर्ध्नि स्थितिर्न चरणैरवताडनानि' इति भवभूतिः । कविगर्हा वार्यते पदस्याब्जत्वरूपणेन ।

**अञ्चितकटीसंवादिकौशेयकम्** । कटिशोभासादृश्यवद्वसनम् । एकदेशसादृश्यं संवादिशब्देन व्यज्यत इव ।

**किंचित्ताण्डवगन्धिसंहननकम्** । मध्यप्रदेशात्कृत्स्नानुभवः । पदाब्जविन्यासः कटीशोभा च रङ्गनटस्य नर्तनचातुर्यानुरूपावयववैशिष्ट्यं द्योतयतः । परिमलरङ्गस्य विषये सादृश्यार्थेऽपि गन्धशब्दप्रयोगः सुश्लिष्टः ।

**निर्व्याजमन्दस्मितम्** । नटस्य स्मितादयः सव्याजाः स्युः । अस्य नटस्य स्मितं निर्व्याजम् ।

**चूडाचुम्बिमुखाम्बुजम्** । अवयवानां परस्परं प्रेम । एकावयवः इतरं सानुरागं चुम्बतीव । मुखपद्मं चूडामलंकुरुत इव ।

**निजभुजाविश्रान्तदिव्यायुधम्** । कोऽयं गुणः । नायुधानि स्वापकाले आयुधागारे, कोशे वा निदधाति । आश्रितान्यायुधानि स्वभुजेष्वेव विश्रमयति ।

विश्रान्त्यनुगुणदैर्घ्यं भुजा इति ।

श्रीरङ्गे। 'रङ्गे यथा नटवरौ क्व च गायमानौ' इति श्रीशुकः । अत्र रङ्ग एव लक्ष्मीसखो विहरति । नोपमानपदावकाशः ।

शरदः शतम् । आदौ पादाब्जमन्ते मुखाब्जम् । अब्जानुकूलशरदृतुना संवत्सरोपलक्षणं हृदयङ्गमम् ।

तत इतः पश्येम लक्ष्मीसखम् । शारदी ज्योत्स्ना भवति लक्ष्मी रङ्गचन्द्रमसः । भूमविद्योक्तप्रकारेण सर्वतः पश्येमैतदपर्याप्तामृतम् ॥

**अग्रे तार्क्ष्येण पश्चादहिपतिशयनेनात्मना पार्श्वयोश्च**
**श्रीभूमिभ्यामतृप्त्या नयनचुलकनैः सेव्यमानामृतौघम् ।**
**वक्त्रेणाविःस्मितेन स्फुरदभयगदाशङ्खचक्रैर्भुजाग्रै-**
**र्विश्वस्मै तिष्ठमानं शरणमशरणा रङ्गराजं भजामः ॥ ७५ ॥**

तत इतः पश्येम लक्ष्मीसखमिति भूमविद्योक्तानुभवमनोरथः प्रादर्शि । भूमा पुरुषो देवीवाहनशयनादिविशिष्टः । पश्चात् पुरतो दक्षिणतश्चोत्तरेण तदनुभवो वर्ण्यते । उत्सवमूर्तिविषयोऽयं श्लोकः । स एव पुरस्तात्पश्चाच्चेतस्ततो भवति ।

**अग्रे** । पुरस्तात् ।

**तार्क्ष्येण** । गरुडेन । लोचनाभ्यां निपीयमानम् ।

**पश्चात्** । पश्चाद्भागे ।

**अहिपतिशयनेनात्मना** । भुजगशयनो मूलविग्रहः । स च उत्सवमूर्तेरात्मा । उभयोस्तादात्म्यम् । स्वेनैव मूलविग्रहेण निपीयते । 'अग्रे किञ्चित् भुजगशयनः स्वात्मनैवात्मनः सन्' इति वेदान्ताचार्याः । तत्र मूलविग्रहस्याग्रे उत्सवमूर्तिकीर्तनम् । अत्र उत्सवमूर्तेः पश्चान्मूलविग्रहस्य कीर्तनम् । भगवान् स्वस्याप्यनुभाव्य एव । 'ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम् ॥'

**पार्श्वयोश्च श्रीभूमिभ्याम्** । उभयतो देवीद्वयेन । 'भुक्तं प्रियाभिरनिमेषविलोचनाभिः' इति वेदान्ताचार्याः ।

**अतृप्त्या** । अनलंबुद्धया अपर्याप्त्या ।

**नयनचुलकनैः सेव्यमानामृतौघम्** । 'लोचनाभ्यां पिबन्निव' इतिवल्लोचनाभ्यां पानम् । अमृतप्रवाहोऽयम् । प्रतिक्षणं चुलकनेऽप्यविच्छिन्ननवनवप्रवाहपरम्पराः स्यन्दन्त इव । लावण्यौघद्वयमिव ।

**वक्त्रेणाविःस्मितेन** । वक्त्रे नवनवं स्मितमाविर्भवदेवास्ते ।

**स्फुरदभयगदाशङ्खचक्रैर्भुजाग्रैः** । एकस्मिन् भुजेऽभयं स्फुरति । इतरेषु तत्समर्थकान्यायुधानि ।

**विश्वस्मै तिष्ठमानम्** । तिष्ठदवसरो विश्वतापप्रशमनमनोरथं व्यनक्तीव । 'विवृणुते तनूं स्वां' इति स्वप्रकाशनाय तिष्ठति । मृग्यमध्यस्थवत् वा निर्णयमन्विष्यंस्तिष्ठति । 'प्रकाशनस्थेयाख्ययोश्च' इति सूत्रविवक्षितमर्थद्वयमपि ग्राह्यम् ।

**शरणमशरणं रङ्गराजं भजामः** । निद्रां परित्यज्यास्मदर्थं तिष्ठते । अस्मत्त्राणेन परस्य तस्य फलमित्यात्मनेपदेन द्योत्यते । 'लोकविक्रान्तचरणौ शरणं तेऽव्रजं प्रभो' इति तिष्ठदवसरः शरणवरणानुकूलः । शरणं प्रपद्यामहे । अशरणमिति शरणव्रज्यायां शरणान्तरराहित्यबुद्धिः ॥

**आर्तापाश्रयमर्थिकल्पकमसह्यागस्करक्ष्मातलं**
**सद्यः संश्रितकामधेनुमभियत्सर्वस्वमस्मद्धनम् ।**
**श्रीरङ्गेश्वरमाश्रयेम कमलाचक्षुर्महीजीवितं**
**श्रीरङ्गे स सुखाकरोतु सुचिरं दास्यं च दत्तां मयि ॥ ७६ ॥**

विश्वत्राणाय चतुर्भिर्भुजैः सर्वाणि फलानि दातुं सङ्कल्प्य तिष्ठतीत्युक्तम् । अत्युदारमिति चोक्तम् । तदेवौदार्यमनुभूयते ।

**आर्तापाश्रयम्** । आर्तो जिज्ञासुरित्याद्यधिकारिषु प्रथम आर्तः । 'आर्तिं जिहीर्षुः' । कैवल्ये तु तद्बुद्ध्या तदग्रहणम् ।

**अर्थिकल्पकम्** । अर्थार्थीति तृतीयोऽधिकारी । अर्थिनःकल्पवदुदाराः क्रियन्ते । यदर्थिनः कल्पकवृक्षा भवन्ति ।

**असह्यागस्करक्ष्मातलम्** । सर्वापराधसहिष्णुः । नन्दनस्य कल्पवृक्षो भूतलं भवतीति विरोधः ।

**सद्यः संश्रितकामधेनुम्** । समुपसृष्टत्वाच्छ्रयणस्य मोक्षार्थी स्यात् मोक्षं दुग्धे । अविद्यानिवृत्तिरुक्ता पूर्वविशेषणेन ।

**अभियत्सर्वस्वमस्सद्धनम्** । भूमविद्योक्तप्रकारेणाभिगतानामभितः सर्वतो भवति । नायं धनवानुदारः । धनमेवायं वदान्यः । धनत्वे च सर्वस्वं धनम् । अस्य धनत्वेन सर्वस्वत्वेन चानुभवो भक्तानाम् । इतरे त्रयोऽपि न भगवन्तं धनत्वेन मन्यन्ते । तं धनादिदातारं मन्यन्ते । तद्भिन्नं स्वस्ववांछितमर्थयन्ते लभन्ते च । प्रतिबुद्धो मुमुक्षुस्तु तमेव धनं सर्वस्वं चाभिमनुते । तस्मै किं स्वभिन्नं दद्यात् । आत्मानमेव ददाति । दानं चानुभवविषयीकरणम् । तस्य परितो भवति ।

**कमलाचक्षुः** । न केवलं कमलमस्य चक्षुः । कमला अस्य चक्षुर्भवति । तया दर्शनप्रयोजककर्त्र्या अयं पश्यति । जननी कमला । न प्रजापराधं पश्येत् । यदि सैवास्य चक्षुरयमपि न पश्येदपराधम् ।

**महीजीवितम्** । धनत्वे सप्राणत्वं न स्यादिति प्राप्ते—'प्राणस्य प्राणश्चक्षुषश्चक्षुः' इत्युच्यते । कमलादीनामीश्वरीणां चक्षुः, प्राणाश्च । धनं प्राणत्वेनाभिमन्वते जनाः । 'बाह्याः प्राणा नृणां ह्यर्थो हरता तं हता हि ते' इति जैनाः । धनत्वकीर्तनानन्तरं प्राणत्वमपि कीर्त्यते । मही क्षमामूर्तिः । साऽस्य प्राणाः ।

**श्रीरङ्गेश्वरमाश्रयेम** । ईश्वरीकीर्तनानन्तरं तदीश्वरः कीर्त्यते । ईश्वरीश्वरमाश्रयेम । प्रणवेश्वरमाश्रयेम । श्रीश्वरं रङ्गेश्वरम् ।

**श्रीरङ्गे** । प्रणवे ।

**सुचिरं स सुखाकरोतु** । सुखयतु आनुलोम्येन नः । सुखाकरोत्विति दैर्घ्यपठनं सुखस्य सुदीर्घत्वमनोरथानुगुणम् ।

**दास्यं च धत्तां मयि** । स ईश्वरः । अहं दासः । मत्स्वरूपानुकूलतद्दास्यं मम दद्यात् । यद्यप्यात्मानं मम दद्यात, मा ममैश्वर्यं भवतु । दास्यमेव मम भवतु । ईश्वरत्वेनैवात्मानं मम ददातु । माऽस्तु ममैश्वर्यम् । धर्मिणमात्मानं मे ददातु । न स्वधर्ममैश्वर्यम् । मद्धर्मं दास्यमेव मह्यं ददातु । 'परधर्मो भयावहः' ॥

**सफणवितानदीप्रमणिमालिसुदामरुचि-**<br>
**म्रदिमसुगन्धिभोगसुखशायितरङ्गधनम् ।**<br>
**मदभरमन्थरोच्छ्वसितनिःश्वसितोत्तरलं**<br>
**फणिपतिडोलिकातलिममाश्वसिमः प्रणताः ॥ ७७ ॥**

तिष्ठतु भगवान् । तस्य प्रेंखोलपर्यङ्किकाभूतशेषशयनं प्रणमाम । शेष आन्दोलिकातलिमत्वेनानुभूयते । दास्यं ददात्विति प्रार्थना कृता । शेषवत्पर्यङ्कीभवनादिपरिचर्यायां विनियुज्येयेति मनोरथ इव । फणिपतिर्डोलिका भवति । सावयवरूपकमिदं पूर्णरूपकं पूर्णस्य भगवतो डोलाविषये ।

**सफणवितानदीप्रमणिमालिसुदामरुचि** । डोलिकातलिमं विशेष्यम् । फणिपतिश्च तत्त्वेन रूप्यते । डोलिकाया वितानमपेक्ष्यते । फणाश्च वितानं भवन्ति । तत्र महार्घरत्नमाला भवेयुः । तत्खचितानि शोभनदामानि भवेयुः । नागरत्नमाला उपरिक्षिप्तनागशरीरायामश्च दीर्घं दाम भवति ।

**म्रदिमसुगन्धिभोगसुखशायितरंगधनम्** । अस्ति विचित्रं

डोलिकातलिमम् । कस्तत्र शायी शायित इति पृष्टे–रङ्गशायी तत्र शायित इत्युच्यते । म्रदिमसुगन्धित्वादिशय्यागुणा भोगिभोगस्य सहजाः । 'भोगिभोगे शयानम्—' इति हंसे वेदान्ताचार्याः । अस्य भोगस्यापि भोगित्वरूपभोगवत्त्वमिति तत्र भावः । सुखमेव शेषभोगः, न तत्साधनमात्रम् । भोगे आनन्दे शायितोऽयम् । ततः सुखशायितः । प्रणवधनस्येयं डोला । निर्निमेषं नित्यजागरूकमपि स्वापयतीयं डोलाशय्या ।

मदभरमन्थरोच्छ्वसितोत्तरलम् । मदश्च भोगप्रयुक्तः । मत्तस्य पीनस्याजगरादेरुच्छ्वासनिःश्वासादयो मन्दमन्दाः स्युः । शयानस्य निद्रालोरतिमन्दमान्दोलनं न्याय्यम् । आन्दोलनं न हस्तेन, किं तु वातेन । वातश्च मुखवायुभूतोच्छ्वासनिःश्वासमात्रम् । अतीव मन्दोऽयं वातः । तेन मन्दमन्दं चाल्यते डोलारूपभोगिशरीरम् । सप्राणा चेतनेयं शय्या । प्राणैश्चाल्यते इयं विश्वप्राणशय्या ।

फणिपतिडोलिकातलिमम् । स्वफणाभिरेव डोलिकां निर्वर्तयति ।

प्रणताः । डोलायै नमस्कुर्मः ।

आश्वसिमः । सप्राणा भवामः । फणिपतेर्मन्दोच्छ्वासनिःश्वासेभ्यो वयं प्राणान् लभमहि ॥

> वटदलदेवकीजठरवेदशिरःकमला-
> स्तनशठकोपवाग्वपुषि रङ्गगृहे शयितम् ।
> वरदमुदारदीर्घभुजलोचनसंहननं
> पुरुषमुपासिषीय परमं प्रणतार्तिहरम् ॥ ७८ ॥

शय्या प्रस्तुता । शय्यान्तराणि वर्ण्यन्ते ।

वटदल । 'वटस्य पत्रस्य पुटे शयानं' निरतिशयबृहद्ब्रह्म ।

देवकीजठर । मातृजठरः सुखमयी शय्या भवति । कोऽयं गुणः ! गर्भवासो भोगाय कल्पते ।

**वेदशिरः** । अशरीरस्यापौरुषेयस्य वेदस्य बौद्धं शिरः पुरुषस्य शय्या भवति ।

**कमलास्तन** । 'नीलातुङ्गस्तनभरतटीसुप्तम्' ।

**शठकोपवाग्वपुषि** । 'तल्पं कल्पान्तयूनः' इति शठकोपवाग्विषये वेदान्ताचार्याः । वपुषीति प्रत्येकमन्वेति । 'शेषश्चित्तं विमलमनसां मौलयश्च श्रुतीनां सम्पद्यन्ते विहरणविधौ यस्य शय्याविशेषाः' इति श्रीस्तुतौ ।

**रङ्गगृहे** । प्रणवरूपायतने ।

**शयितम्** । शयानम् । णिचमन्तर्भाव्य शायितमर्भकवत् ।

**वरदम्** । यौगिकार्थस्य ग्रहणम् । प्रणतार्तिहरमित्युक्तेस्तन्मूर्तेरभेदबुद्ध्या श्रीवरदराजस्यैव वा ग्रहणं स्यात् । वरदानार्थमेताः शय्या आश्रीयन्ते ।

**उदारदीर्घभुजलोचनसंहननम्** । भुजादीनां दीर्घत्वं वरदानानुकूलोदारत्वोपयुक्तम् ।

**प्रणतार्तिहरं परमं पुरुषम्** । 'वरदशब्दः' 'प्रणतार्तिहरशब्दः' इति शब्दद्वयं देवराजस्मरणं तदभेदबुद्धिं च द्रढयत इव ।

**उपासिषीय** । भजेय ।

> **उदधिपरमव्योम्नोर्विस्मृत्य पद्मवनालया-**
> **विनिमयमयीं निद्रां श्रीरङ्गनामनि धामनि ।**
> **फणिपरिबृढस्फारप्रश्वासनिःश्वसनक्रम-**
> **स्खलितनयनं तन्वन्मन्वीत नः परमः पुमान् ॥ ७९ ॥**

बह्व्यः शय्याः परिकीर्तिताः । प्रधाने क्षीराब्धिः परमव्योमस्थशेषपर्यङ्कश्चेति द्वे शय्ये भवता विस्मृते इत्याक्षिप्ते उच्यते । नाहं व्यस्मार्षं ; रङ्गशायी भगवांस्ते विस्मृत्यात्र रङ्गे शेत इत्युच्यत इव उदधिपरमव्योम्नोर्विस्मृत्येति ।

'**पद्मवनालयाविनिमयमयीं निद्रां**' लक्ष्म्या वा निद्रया वा परिवृत्त्या विहरते । पद्मवनालयया प्रियया 'परिष्वक्तो' निद्राण इव 'न बाह्यं

किंचन वेद नान्तरम्' । सर्वेतरविस्मारकत्वं परिष्वङ्गद्वयस्य तुल्यम् । अतो लक्ष्मीनिद्रयोर्विनिमयकथनमुचितम् । 'निद्रावशेन भवताऽप्यनवेक्षमाणा पर्युत्सुकत्वमबला निशि खण्डितेव । लक्ष्मीर्विनोदयति येन दिगन्तलम्बी सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥' इति श्लोकोऽत्र भाव्यः । फणिपरिबृढेत्यादि । ब्रह्म परिबृढं सर्वतः इत्युक्तस्य फणिपरिबृढोऽनुरूपशय्या ।

**मन्वीत नः** । निद्रानप्यस्मान् मन्वीत । जाग्रतोऽपि वयं तं न मनुमहे । निद्रानपि सोऽस्मान् मन्वीत ॥

**जलधिमिव निपीतं नीरदेनाद्रिमब्धौ**
**निहितमिव शयानं कुञ्जरं वाऽद्रिकुञ्जे ।**
**कमलपदकराक्षं मेचकं धाम्नि नीले**
**फणिनमधिशयानं पूरुषं वन्दिषीय ॥ ८० ॥**

विश्वकुक्षिम्भरि नीलं तेजोऽनुभूयते । नीलो भगवान् । तत्तेजसा नीलं विमानम् ।

**नीरदेन निपीतं जलधिमिव** । नीरदो विमानम् । तद्गर्भस्थो भगवाञ्जलधिरिव नीलतेजःपुञ्जः ।

**अब्धौ निहितमद्रिमिव** । अब्धिर्विमानं नैल्यतेजसा । तत्र निहितो नीलपर्वतरूपो निधिर्भगवान् ।

**अद्रिकुञ्जे शयानं कुञ्जरमिव** । अद्रिकुञ्जो विमानम् । तत्र शयानो गज इव भगवान् ।

**नीले धाम्नि** । नैल्यतेजोमये विमाने ।

**मेचकं** । नीलम् । अनेन नीले धामनि नीलस्य तेजसोऽनुभवः ।

**कमलपदकराक्षम्** । अस्मिन्नीलतेजःप्रवाहे पदकराक्षिरूपपद्मानि ।

**फणिनमधिशयानं पूरुषं वन्दिषीय** । वन्दनमाशास्यते । न वन्दनेनाशीर्लिप्सा । सततवन्दनमेव परमफलम् ॥

**श्रीरङ्गेशय इह शर्म निर्मिमीता-**
**मातामाधरपदपाणिविद्रुमो नः ।**
**कावेरीलहरिकरोपलाल्यमानो**
**गम्भीराद्भुत इव तर्णकोऽर्णवस्य ॥ ८१ ॥**

उदधित्वमुत्प्रेक्षितं पूर्वम् । उदधितर्णकत्वमुत्प्रेक्ष्यते । एतदनुसृत्योक्तमभीतिस्तवे 'जलधिडिम्भडम्भस्पृशः' इति ।

**आताम्राधरपदपाणिविद्रुमो नः ।** विद्रुमवत्त्वं तत्सादृश्यवदधरपादतलपाणितलैः । सद्यो जातस्य डिम्भस्य पाणिपादादीनामत्यन्तताम्रत्वम् ।

**कावेरीलहरिकरोपलाल्यमानः ।** सद्यो जातं जलधिडिम्भं मातृभूतजलधिपत्नी कावेरी स्वलहरीकरैरुपलालयति ।

**अर्णवस्य तर्णकः ।** सद्योजातजलधिडिम्भः ।

**श्रीरङ्गेशयः ।** डिम्भस्य शयानत्वमेव । न तिष्ठदवस्था । उत्तानशयो डिम्भः ।

**इह शर्म निर्मिमीताम् ।** तिष्ठतु विश्वनिर्माणम् । सुखं निर्मिमीताम् ॥

**सिञ्चेदिमं च जनमिन्दिरया तटित्वा-**
**न्भूषामणिद्युतिभिरिन्द्रधनुर्दधानः ।**
**श्रीरङ्गधामनि दयारसनिर्भरत्वा-**
**दङ्गौ शयालुरिव शीतलकालमेघः ॥ ८२ ॥**

अर्णवतर्णकत्वेन रूपणं कृतम् । चक्षुर्निर्वृतिस्तद्दर्शनेनाभूत् । मेघत्वेऽस्मात्सिञ्चनेन सर्वाङ्गाणामाह्लादो जायेतेति सावयवमेघरूपकविन्यासः ॥

**इन्दिरया तटित्वान् ।** विचित्रोऽयं मेघः । यद्यपि मेघश्शीतलः ; तत्पत्नी तटिद्दाहकत्वादिबाधकशीला । अस्य मेघस्य तटिदिन्दिरा । सा च सर्वभूतजननी करुणामय्यत्यन्तशीतला अज्ञातनिग्रहा । मेघादपि शीतलतरेयं तटित् । प्रभयाऽत्र सादृश्यम् ; लतात्वेन च ।

भूषामणिद्युतिभिरिन्द्रधनुर्दधानः । आभरणरत्नानां विचित्रवर्णरश्मीनामिन्द्रधनुराकारत्वम् ।

दयारसनिर्भरत्वात् । मेघश्चेद्रसपूर्णः स्यात् । अयं दयारसपूर्णः ।

अङ्कौ शयालुरिव शीतलकालमेघः । रसपूर्णः शेते ।

इमं च जनं सिञ्चेत् । अनर्हमतिनिकृष्टमपि सिञ्चेत् । पर्जन्यस्य नोच्चनीचभेदः ॥

आमौलिरत्ननिकरात्पुनराच पद्भ्यां
धामक्रमोन्नमुदारमनोहराङ्गम् ।
श्रीरङ्गशेषशयनं नयनैः पिबामः
पश्यन्मनःप्रवणमोघमिवामृतस्य ॥ ८३ ॥

अत्रामृतप्रवाहत्वेनानुभवः । पश्यतां मनः पूर्यते

आमौलिरत्ननिकरात्पुनराच पद्भ्याम् ।

धामक्रमोन्नमुदारमनोहराङ्गं । तेजःपरम्परया एधमानानि अपरिच्छेद्यमहिमानि अङ्गान्यस्येति ।

पश्यन्मनःप्रवणममृतस्यौघमिव । ओघश्चेन्निम्नं गच्छेत् । अस्मन्मनो निम्नम् । तत्प्रवणोऽयमोघः । स्वयमेवास्मन्मनसि पतति ।

श्रीरङ्गशेषशयनम् । प्रणवशाय्ययं शेषशायी । उभयत्र शेते । यथा प्रासादे खट्वायां शयीत पुरुषस्तथा श्रीरङ्गे प्रणवे शेषे शेते । द्वयोः समुच्चयः ।

नयनैः पिबामः । लोचनैः पानमेतदमृतस्य । 'एतदेवामृतं दृष्ट्वा तृप्यन्ति' । न खादन्ति न पिबन्ति । निर्निमेषनयनाभ्यामनुभवन्ति ।

अरविन्दितमंघ्रिपाणिवक्त्रै-
रपि तापिञ्छितमञ्चिताङ्गकान्त्या ।
अधरेण च बन्धुजीवितं श्री-
र्नियतं नन्दनयेत रङ्गचन्द्रम् ॥ ८४ ॥

अमृतौघत्वमुक्तम् । ओघत्वेनानुभूतो लक्ष्म्या नन्दनवनत्वेनानुभूयते । दि-व्यमूर्तेर्दिव्योद्यानत्वमुचितम् । आनन्दमयस्य नन्दनवनत्वमुचितम् । रङ्गच-न्द्रो नन्दनायमानः श्रियमानन्दयति ।

**अंघ्रिपाणिवक्त्रैररविन्दितम्** । अमृतौघे पद्मानि । नन्दने दिव्यपद्मानि । दिव्यमूर्तेः पादपाणिमुखानि दिव्यपद्मानि । चन्द्रोऽरविन्दायत इत्याश्चर्यम् । सर्वविरोधशमनोऽयं शान्तिसमृद्धोऽमृतानन्दः पूरुषः ।

**अञ्चिताङ्गकान्त्या तापिञ्छितमपि** । कृत्स्नाङ्गनीलकान्तिस्ता-पिंछसादृश्यमावहति । तापिञ्छो नीलपुष्पम् । 'तापिञ्छलसन्मुखाय' इति शुकः ।

**अधरेण च बन्धुजीवितम्** । बन्धुजीवो रक्तपुष्पम् । अधरेण तद्वानिव । प्रियाजनानां जीवितं प्राणाः अधरः ।

**श्रीः** । इन्दिरा । **नियतम्** । ध्रुवम् ।

**रङ्गचन्द्रम्** । प्रणवविमानान्तर्गतं चन्द्रमसम् ।

**नन्दनयेत** । नन्दनवनं कुर्वीत ॥

**अन्योन्यरञ्जकरुचोऽनुपमानशोभा**
**दिव्यस्रगम्बरपरिष्करणाङ्गरागाः ।**
**संस्पर्शतः पुलकिता इव चिन्मयत्वा-**
**द्रङ्गेन्दुकान्तिमधिकामुपबृंहयन्ति ॥ ८५ ॥**

अस्य रङ्गेन्दोर्ब्रह्मणः कान्तिर्बृंह्यते दिव्यस्रगादिभिः । 'शक्यमम्बरमारुह्य मेघसोपानपंक्तिभिः । कुटजार्जुनमालाभिरलंकर्तुं दिवाकर'मित्यादिकविः । वर्षर्तौ मन्दवीर्यो दिवाकरः । तद्गतावेव तं पुष्पैरलङ्कर्तुं कदाचिच्छक्येत । इन्दवे मालासमर्पणे नर्तुविशेषापेक्षा । सर्वर्तुषु मालाः समर्प्यन्तेऽस्मै रङ्गच-न्द्रमसे ।

**अन्योन्यरञ्जकरुचः** । परस्परं शोभावहत्वम् । परस्परं रञ्जकत्वं च । चिन्मयत्वादिति हेतुरलाप्यन्वीयेत ।

**अनुपमानशोभादिव्यस्रगम्बरपरिष्करणाङ्गरागाः**। यद्यपि प्रत्येकमनुपमत्वमेषां परस्परं भूष्यत्वं भूषकत्वं चास्ति । 'साधारणो भूषणभूष्यभावः' इति महाकव्युक्तिर्भाव्या ।

**संस्पर्शतः पुलकिता इव**। चदि आह्लादने। चन्द्रस्पर्शे चेतनानामाह्लादो नियतः । आह्लादस्य पुलका लक्षणम् ।

**चिन्मयत्वात्**। 'द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः' इत्यचेतनस्य चन्द्रकान्तस्यानन्दविकृतिर्भवेत् ; नेतरेषामचेतनानां तादृशी विकृतिर्भवेत् । चेतनत्वमुपपादनीयममीषां फुलकसंभवाय । चिन्मयाः खल्वमी । 'चिन्मयैः स्वप्रकाशैश्च—' इति प्रमाणस्य प्रत्यभिज्ञापनम् । नित्यविभूतिस्थसर्वपदार्थानां चिन्मयत्वमिति पक्षोऽत्र प्रदर्श्यते । पक्षद्वयमप्यस्ति ।

**रङ्गेन्दुकान्तिमधिकामुपबृंहयन्ति**। ब्रह्मकान्तिरधिकं बृंह्यत इत्याश्चर्यम् । उपबृंहणवद्विशदीकुर्वन्ति स्वरूपम् ॥

> **द्रुतकनकजगिरिपरिमिल-**
> **दुदधिप्रचलितलहरीवदहमहमिकया ।**
> **स्नपयति जनमिमपहरति**
> **तमः फणिशयमरकतमणिकिरणगणः ॥ ८६ ॥**

अङ्गरागादयोऽनुभूताः । भगवानेव फणिशयने मरकतमणिरिवाभाति । तन्नीलरश्मयोऽनुभूयन्ते । तैर्वयं स्नाप्यामह इव । असदन्धतमसमपह्रियत इव तत्कान्त्यालोकैः ।

**फणिशयमरकतमणिकिरणगणः**। चिन्मयत्वं न केवलमङ्गरागद्रव्यादीनाम् । भगवन्नीलविग्रहकान्तीनामपि चिन्मयत्वमिवेति तासामहमहमिकावर्णनेनाभिप्रेयत इव ।

**द्रुतकनकजगिरिपरिमिलदुदधिप्रचलितलहरीवत्**। हिरण्मयः पुरुषो हिरण्यगिरिरिव। द्रवीभूतकनकभवोऽयं गिरिः । कनकमयं तेजः । उद

धिवन्नीलमय्यापि कान्तिः । मिलितमिव तेजः । कनकसरित्तीरे कनकगिरिः ।

**स्नपयति जनमिमम्** । अस्य तेजसो न तापकत्वम् । शीतं स्नपयत्युपसत्तृजनम् ।

**अपहरति तमः** । नैल्येऽप्यस्मन्मनोन्धकारमपहृत्य तत्र भास्वज्ज्ञानदीपं निवेशयति ।

**फणिशयमरकतमणिकिरणगणः** । नीलमणेः प्रभावलिः ॥

**भोगीन्द्रनिःश्वसितसौरभवर्धितं श्री-**
**नित्यानुषक्तपरमेश्वरभावगन्धि ।**
**सौरभ्यमाप्लुतदिशावधि रङ्गनेतु-**
**रानन्दसम्पदि निमज्जयते मनांसि ॥ ८७ ॥**

स्नपनमुक्तम् । 'स्नानार्द्रमुक्तेष्वधिधूपवासम्—' इति स्नानानन्तरं गन्धानुलेपनाद्यपेक्षा । सौरभ्येणाप्लुतत्वं वर्ण्यते । कान्त्यम्भोमज्जनमुक्तम् । इदानीमानन्दे मग्नत्वमुच्यते ।

**भोगीन्द्रनिःश्वसितसौरभवर्धितम्** । परमसाम्यवत्त्वाच्छेषस्यापि सर्वगन्धत्वसम्भवः । तन्निःश्वासगन्धेनोपचीयत इव शेषिणः सौरभम् । 'क्षीरं शर्करयेव—' शेषशेषिणोर्मेलनं नितरां शोभेत ।

**श्रीनित्यानुषक्तपरमेश्वरभावगन्धि सौरभ्यम्** । गन्धद्वारामिति प्रसिद्धायाः श्रियो नित्यानुषङ्गेण विचित्रः परिमलः । श्रीनित्ययोगेन जगत्कारणत्वादिरूपपारमैश्वर्यं सिद्ध्यति । तस्या नित्ययोगेन पारमैश्वर्यवासितत्वमस्य सौरभस्य । नायं गन्धः केवलं परिमलः । पारमैश्वर्यवासितोऽयं परिमल इति वैचित्र्यं प्रदर्श्यते ।

**आप्लुतदिशावधि** । सर्वदिक्प्लावकं सौरभ्यम् । सर्वदिक्षु वाति सर्वगन्धस्य गन्धः । सर्वदिग्व्यापी गन्धः । तद्वान् सर्वगन्धः । अर्श आद्यच् ।

**आनन्दसम्पदि निमज्जयते मनांसि** । दिगन्तप्लावकमस्म-

न्मनांस्याप्लावयति । अनेकमनोवत्त्वमनोरथो भोगाधिक्याय । 'गात्रैः शोकाभिकर्शितैः' इतिवत् । स्वयं दिगन्तेऽव्याप्लुतं स्वसक्तान्याप्लावयति ॥

**रङ्गभर्तुरपि लोचनचर्चा**
**साहसावलिषु लेखयमानम् ।**
**पुष्पहास इति नाम दुहानं**
**सौकुमार्यमतिवाङ्मनसं नः ॥ ८८ ॥**

वाङ्मनसागोचरसौकुमार्यस्यानुभवः । आनन्दे मज्जनमुक्तम् । तद्विषये 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' इत्युक्तं श्रुत्या । तदानन्दादिसकलकल्याणगुणादिविषयम् , आनन्दस्य सर्वोपलक्षकत्वात् । 'गुणास्त्वदेकैकगुणावधीप्सया सदाऽऽश्रिता नोद्यमतोऽतिशेरते' । आनन्दविषये श्रुत्युक्तं वाङ्मनसातीतत्वं सौकुमार्येऽनुभूयते ।

**लोचनचर्चामपि** । विविच्य दर्शनमपि । अस्मन्नयनरश्मिभिरभिघातमपि न सहेत तत्सौकुमार्यम् ।

**साहसावलिषु लेखयमानम्** । 'आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितम्—' इत्यादिसाहसावल्युल्लेखनं कविभिः । न केवलं स्वकर्तृकेक्षणादिव्यापारः साहसम् । अन्यकर्तृकदर्शनादिकमपि साहसम् । 'चेटीभृशालोकितैरङ्गम्लानि—' इति श्रीगुणरत्नकोशे ।

**पुष्पहास इति नाम दुहानम्** । 'पुष्पहासः प्रजागरः' इति सहस्रनामसु पठ्यते ।

**रङ्गभर्तुरपि** । नटस्य कठिनजङ्घादिव्यापारैरङ्गकाठिन्यवतः स्वाभाविकं सौकुमार्यमित्याश्चर्यम् । अपिना विरोधस्फोरणम् । रङ्गभर्ता नटो सर्वदर्शनार्थमेव नटति । तद्दर्शनं साहसमित्याश्चर्यम् । नटस्य गात्रविक्षेपेषु लोचनचर्चा न्याय्या ।

**अतिवाङ्मनसं नः** । यद्यप्यस्मन्मनांसि मज्ज्यन्ते, अवशादबुद्धि-

पूर्वकं निमज्ज्यामहे । नास्माकं तद्विषयवाचि वा तच्चिन्तायां वा सामर्थ्यम् ॥

**एकैकस्मिन्परमवयवेऽनन्तसौन्दर्यमग्नं**
**सर्वं द्रक्ष्ये कथमिति मुधा मा मथा मन्दचक्षुः ।**
**त्वां सौभ्रात्रव्यतिकरकरं रङ्गराजाङ्ककानां**
**तल्लावण्यं परिणमयिता विश्वपारीणवृत्ति** ॥ ८९ ॥

भवतु साहसं दर्शनम् । 'न साहसमनारूढो नरो भद्राणि पश्यति' 'आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम् । पातकान्याशु नश्यन्ति किं पुनस्तूपपातकम् । .... .... ।' इति भगवदाज्ञाभूतस्मृतिः । किं कुर्मः । साहसेनापि पश्यामः परमपुरुषम् । मज्जनमुक्तम् । यथैकैकगुणे मज्जनं तथैकैकावयवशोभायां मज्जनं भवेत् । अगाधानुभवसागरे मग्नस्य कथमुन्मज्जनसम्भवः ? प्रथमावयवसौन्दर्य एव मग्नाः स्याम । कथं कृत्स्नविग्रहानुभवः सम्भवेदित्यत्रोपायश्चिन्त्यते । 'यद्यत्पश्यामि ते गात्रं पूर्णेन्दुसदृशानने । तत्र तत्रैव सुश्रोणि चक्षुर्मम निबद्ध्यते ॥' इति विंशतिचक्षुष्मानपि दशाननः ।

**मन्दचक्षुः** । विग्रहसौन्दर्यरसपानपीनत्वाच्चक्षुषो मन्दगमनम् ।
**एकैकस्मिन्नवयवे परमनन्तसौन्दर्यमग्नम्** । अनन्तस्य प्रत्यङ्गस्यानन्तं सौन्दर्यम् । अनन्ते मज्जने उन्मज्जनं दुष्करम् । एकैकस्मिन्नेव ।
**सर्वं द्रक्ष्ये कथमिति मुधाः मा मथाः** । मा निराशं भव । 'भव हृदय साभिलाषम्' ।

**सौभ्रात्रव्यतिकरकरं तल्लावण्यम्** । किं विस्मृतं त्वया सौन्दर्यं लावण्यमिति शोभाद्वयमस्ति सुन्दरवस्तुष्विति । सौन्दर्यमवयवशोभा । समुदायशोभा लावण्यम् । लावण्यानुभवेनैकस्मादवयवादुपरिगमनं संभवेत् । लावण्यानुभवोऽप्यत्र नयेन्मनः । 'धवलत्वमिवान्तरा—' इतिवदन्तरान्तरावयवानां समुदायशोभाऽपि दृष्टिगोचरा भवति । अन्योन्यं सुघटितानामत्र-

यवानां समुदायशोभानुभूयमानावयवसुश्लिष्टावयवान्तरदर्शनं घटयति ।

विश्वपारीणवृत्ति । सर्वदृक्त्वेन ।

परिणमयति । समर्थयेत ॥

**वपुर्मन्दारस्य प्रथमकुसुमोल्लाससमयः**
**क्षमालक्ष्मीभृङ्गीसकलकरणोन्मादनमधु ।**
**विकासः सौन्दर्यस्रजि रसिकतासीधुचुलको**
**युवत्वं रङ्गेन्दोः सुरभयति नित्यं सुभगताम् ॥ ९० ॥**

लावण्यमित्युक्तम् । कथं पुराणस्य वृद्धस्य तत्सम्भवः ? पुराणपुरुषोऽप्ययं नित्ययुवा ।

**मन्दारस्य वपुः** । रङ्गेन्दोर्विग्रहो मन्दारप्रख्यः ।

**प्रथमकुसुमोल्लाससमयः** । वसन्तसमयः । 'आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः---' इति शाकुन्तले । वसन्तप्रारम्भ इव भगवद्वपुः ।

**क्षमालक्ष्मीभृङ्गीसकलकरणोन्मादनमधु** । वसन्तसमयप्रारम्भे मधुभरितानि कुसुमानि स्युः । क्षमालक्ष्मीति द्वे उत्तमभ्रमर्यौ । रसिकतमे ते । मकरन्दनिर्भरात्सारतमादस्मात्पुष्पात्कामं मधु निपीयोन्मत्तसकलकरणे भवतः । अस्य वपुरेव तत्करणोन्मादकमधु । मधुमासो मधु च भवति ।

**विकासः सौन्दर्यस्रजि** । मालाभूतसौन्दर्यस्य विकास एव यौवनम् ।

**रसिकतासीधुचुलकः** । रसिकतां रासिक्यं रसयति । न रसमात्रम् ।

रङ्गेन्दोर्युवत्वं नित्यं सुभगतां सुरभयति । 'चन्द्रं श्रिता पद्मगुणान्न भुंक्ते पद्माश्रिता चान्द्रमसीमभिख्याम् । उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ' इत्युक्तं महाकविना पार्वतीयौवनवर्णने । अस्मिन् रङ्गेन्दौ स्वाभाविकं महत्सौरभ्यम् । सौरभ्यसौभाग्ययोरत्र नित्यमै-

काधिकरण्यम् । अस्य युवत्वं नित्यम् । प्रसिद्धचन्द्रविलक्षणोऽयं सौरभ्यवान् रङ्गचन्द्रः ॥

किरीटचूडरत्नराजिराधिराज्यजल्पिका ।
मुखेन्दुकान्तिरुन्मुखं तरङ्गितेव रङ्गिणः ॥ ९१ ॥

मुखादारभ्य सौन्दर्यानुभवः । प्रथममृषेः शठकोपस्य सुन्दरबाहुमुखशोभानुभवरीत्याऽत्र किरीटस्य मुखशोभाविकासत्वेनोत्प्रेक्षणम् । रङ्गराजस्याधिराज्यसूचककिरीटस्य प्रथमग्रहणमुचितम् । किरीटस्य मुखचन्द्रिकाकान्तिविकासत्वान्मुखमेवानुभूयते । पञ्चचामरा वृत्तम् । भगवन्मुखं चामरपञ्चकेन विबीजयिषितमिव । उत्तरार्धपादद्वयं न लभ्येत । द्विपदीखण्डोऽयम् ।

आधिराज्यजल्पिका । अधिराजत्वोद्घोषिका ।

किरीटचूडरत्नराजिः । किरीटचूडास्थरत्नपङ्क्तिः ।

रङ्गिणो मुखेन्दुकान्तिः । मुखचन्द्रप्रभा ।

उन्मुखं । उपरि प्रसृतं यथातथोन्मस्तकम् ।

तरङ्गितेव । उज्जृम्भितेव । रङ्गिणस्तरङ्गितत्वामिति शब्दानुरूप्यम् । तथैव शृङ्गं रङ्गप्रभुमणिकिरीटमित्यनन्तरश्लोके ॥

शिखारत्नोद्दीप्रं दिशि दिशि च माणिक्यमकरी-
लसच्छृङ्गं रङ्गप्रभुमणिकिरीटं मनुमहे ।
समुत्तुङ्गस्फीतं चिदचिदधिराज्यश्रिय इव
प्रियाक्रीडं चूडामणिमपि नितम्बं तमभितः ॥ ९२ ॥

अधिराजत्वद्योतकत्वरूपोपकारात्किरीटस्य पुनः पार्थक्येनानुभवः । आधिराज्यश्रियः क्रीडापर्वतमिव भाति किरीटः ।

शिखारत्नोद्दीप्रं दिशि दिशि च । सर्वदिक्प्रसरचूडारत्नोज्ज्वलकान्ति क्रीडापर्वतशिरो रत्नोज्ज्वलम् ।

माणिक्यमकरीलसच्छृङ्गम् । किरीटोपरिभागे माणिक्यघटित-

मकरिकाभूषणं भासते । तेन विलसति किरीटपर्वतशृङ्गम् ।

**रङ्गप्रभुमणिकिरीटम्** । उच्चैःशिरा रङ्गप्रभुः, तस्य रत्नकिरीटम् ।

**समुत्तुङ्गस्फीतम्** । उन्नतो विशालश्चायं पर्वतः । दिक्षु विदिक्षु प्रसरद्रश्मिबाहुल्यादुन्नतविशालपर्वतसादृश्यम् ।

**चिदचिदधिराज्यश्रियः प्रियाक्रीडम्** । चेतनाचेतनविश्वाधिपत्यलक्ष्म्याः प्रियारामं क्रीडापर्वतोद्यानम् ।

**तमभितश्चूडामणिं नितम्बमपि** । तं परितः कटकवन्नासमानं चूडामणिमपि ।

**मनुमहे** । दिशि दिशि पुरस्तात् पृष्ठतश्चानुभवामः ॥

**विहरतु मयि रङ्गिणश्चूलिकाभ्रमरकतिलकोर्ध्वपुण्ड्रोज्ज्वलम् ।**
**मुखममृततटाकचन्द्राम्बुजस्मयहरशुचिमुग्धमन्दस्मितम् ॥ ९३ ॥**

विहरतीति हरिः । अमृततटाकचन्द्राम्बुजस्मयं हरतीति हरिः । तत्स्मयहरं हरेर्मुखं मयि विहरतु । स्मयहरं मुखं मयि सस्मितं विहरतु । एवं बहुधा वैचित्र्यप्रदर्शनमिव ।

**चूलिकाभ्रमरकतिलकोर्ध्वपुण्ड्रोज्ज्वलम्** । अधो बद्धैः कुन्तलैस्तिलकेन च शोभमानम् ।

**अमृततटाकचन्द्राम्बुजस्मयहरशुचिमुग्धमन्दस्मितम्** । स्मितेन विकसितम् ।

**रंगिणो मुखं मयि विहरतु** । तिष्ठतु रङ्गे विहारः । मयि विहरतु । रङ्गनिवासी रङ्गविहारी रंगी ॥

**मुखपुण्डरीकमुपरि त्रिकण्टकं**
**तिलकाश्च केसरसमाः समौक्तिकाः ।**
**इह रंगभर्तुरभियन्मधुव्रत-**
**प्रकराश्रियं भ्रमरकाणि बिभ्रति ॥ ९४ ॥**

मुखस्य पुण्डरीकस्मयहरत्वमुक्तम् । पुण्डरीके मधुव्रता लीना भवेयुः । किं मधुव्रतास्तत्र सन्तीति पृष्टे—तद्भ्रूयस्त्वश्रीरुच्यते । ऊर्ध्वपुण्ड्रशोभि मुखमनुभूतम् । ऊर्ध्वपुण्ड्रमनुभूयते । ऊर्ध्वं पुण्ड्रं विचित्रमनुभूतं श्रीशङ्कराचार्यैः । 'उत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमःखण्डनं मण्डनं नः' इति । कथं वयं तन्नानुभवामः ।

**मुखपुण्डरीकमुपरि त्रिकण्टकम्** । नालोपरि पुण्डरीकं स्यात् । अत्र मुखपुण्डरीकोपरि नालत्रयम् ।

**भ्रमरकाणि** । ललाटलम्बमानचूर्णकुन्तलाः ।

**अभियन्मधुव्रतप्रकरश्रियम्** । समन्तात्परिभ्रमतां भ्रमराणां समूहस्य शोभा वहन्ति । अभियन्मधुव्रतेति सर्वदाभिगच्छद्भक्तगणा अपि गृह्यन्ते ॥

**हृदयं प्रसादयति रंगपते-**
**र्मधुरोर्ध्वपुण्ड्रतिलकं कलितम् ।**
**अलिकार्धचन्द्रदलसंवलिता-**
**ममृतस्रुतिं यदभिशङ्कयते ॥ ९५ ॥**

अम्बुजस्मयहरत्वमुपपादितं मधुस्यन्दनरूपणेन मधुकराकर्षणवर्णनेन च । चन्द्रस्मयहरत्वं निरूप्यतेऽमृतप्रवहणवर्णनेन । अष्टमीचन्द्रसदृशललाटादमृतं प्रवहति । त्रिपथगावदोघत्रयेण स्यन्दते । अमृतौघत्रयमेव त्रिपुण्ड्रकम् । ऊर्ध्वं गच्छन्तीमे अमृतौघाः । अमृतत्वस्य ऊर्ध्वगमनं न्याय्यम् । नेमे निम्नगाः ; किं तूर्ध्वगाः । अमृतनाड्य इव । 'तयोर्ध्वमायन्नमृतत्वमेति' । 'उत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमःखण्डनं मण्डनं नः' इति श्रीशङ्कराचार्या ऊर्ध्वपुण्ड्रेन आत्मस्रोतस ऊर्ध्वगमनं व्यज्यत इत्यभिप्रयन्ति ।

**रंगपतेः** । नटस्यालिकं सम्यक्तिलकाङ्कितं स्यात् ।

**कलितम्** । धृतम् ।

**प्रसादयति हृदयम्** । ऊर्ध्वगमनेनामृतत्वद्योतनमस्मान् प्रत्यायय-ति । मां सम्यक् प्रसन्नं 'संप्रसादं' करोति । तथा च परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पत्स्ये' । त्रिपुण्ड्रं चालिकचन्द्रनिःसरदमृतस्रुतिवद्भाति ॥

**सरसीरुहे समवनाम्य मदा-**
**दुपरिप्रनृत्यदलिपंक्तिनिभे ।**
**स्फुरतो भ्रुवावुपरि लोचनयोः**
**सविलासलास्यगति रंगपतेः ॥ ९६ ॥**

भ्रमरपंक्तिरुक्ता । मुखपुण्डरीकमुक्तम् । तत्र मधुगलनममृतस्रवश्चोक्ते । रङ्गभृदयं नटाग्रेसरो नर्तनरसिकः । नटस्य भ्रुवोर्विलासचेष्टितानि मनोहराणि स्युः । रङ्गनटस्य भ्रुवावेव मुखसरसीरुहे मत्तप्रनृत्यद्भ्रमरावलीत्वेन रूप्येते । एवमपेक्षितसर्वप्रदर्शनं भवति ।

**सरसीरुहे** । उत्फुल्लपङ्कजतटाकवद्दिव्यविग्रहः । तत्र दिव्यसरसि प्ररोहत्पङ्कजे लोचने । नेत्रपङ्कजे सरस अपचाय्य नान्यत्र नीयेते । सरस्येव नालेऽवतिष्ठतः । भ्रमरैरहमहमिकयाश्रयणं मधुपानादिकं च । एतद्व्यज्यते सरसीरुहशब्देन ।

**समवनाम्य** । अवनते कृत्वा ।

**मदात्** । पीतमधुमदात् ।

**उपरि प्रनृत्यदलिपंक्तिनिभे** । भ्रमराणां पद्मोपरि नर्तनं स्वभावः तत्पंक्तिसादृश्यं लोचनपङ्कजोपरि नृत्यद्रङ्गपतिभ्रुवोः । रङ्गनटभ्रुवौ ध्रुवं प्रकर्षेण नृत्येयुः ।

**लोचनयोरुपरि** । 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रौता-नुभवः । तदुपरि ।

**रंगपतेर्भ्रुवौ** । नटत्वद्योतकरङ्गपतिग्रहणमत्र साभिप्रायम् ।

**सविलासलास्यगति** । अनेन प्रनृत्यद्भ्रमरपंक्तिसादृश्यम् । क्रि-

याविशेषणमव्ययम् ।

स्फुरतः । प्रकाशेते । भ्रुवोः स्फुरणव्यवहारः प्रसिद्धः । तत्पद्ग्रहणमत्रात्यन्तसुश्लिष्टम् ॥

**स्मरशरनलिनभ्रमान्नेत्रयोः परिसरनमदिक्षुचापच्छवि ।**
**युगमुदयति रंगपतेर्भ्रुवोर्गुरुकुलमिव शार्ङ्गनृत्तश्रियः ॥ ९७ ॥**

भ्रुवोरनुभवो वर्तते । कामशरासनोपमितत्वं भ्रुवोः । मन्मथस्येक्षुचाप एव भ्रुवौ भूत्वा मन्मथशरभूतलोचनपद्मनिकटे नमन्वर्तत इव । भ्रुवोर्नृत्तरङ्गं रङ्गपतेर्मुखम् । भ्रुवौ नमितकामधनुः । भ्रूविभ्रमानुसारि दिव्यायुधभूतशार्ङ्गस्य नर्तनम् । तस्मात् गुरुकुलमिव भवतो भ्रुवौ शार्ङ्गनृत्तश्रियः । धनुर्भूतभ्रूनर्तनमनु माणवकशार्ङ्गनर्तनम् । शार्ङ्गेण योध्यमानाः शत्रवोऽपि प्रथमं भगवतो निरतिशयसुन्दरभ्रूशोभया कामशरासनेनेव वशीक्रियन्त इति प्रसिद्धम् । प्रथमं मदनबाणहता अनन्तरमेव शार्ङ्गेण हन्यन्ते ।

**स्मरशरनलिनभ्रमात्** । पुण्डरीकदलामलायतेक्षणे पुण्डरीकभ्रमः सहजः, सौसादृश्यस्य निर्भरत्वात् । मन्मथशरपद्ममिति भ्रान्त्वा ।

**परिसरनमदिक्षुचापच्छवि** । शरकुसुमदर्शने मान्मथेक्षुचापः स्वयं नमति शरयोः स्वस्मिन् सन्धानाय । तच्छोभां वहति भ्रूयुगम् ।

**रंगराजभ्रुवोर्युगम्** । रङ्गराजेति नर्तनचातुर्यं द्योत्यते । तद्भ्रूयुगं प्रकाशते ।

**शार्ङ्गनृत्तश्रियो गुरुकुलमिव** । शार्ङ्गनर्तनशोभाया आचार्यस्थानमिव । भ्रूविभ्रमाधीनत्वं शार्ङ्गव्यापारस्य ।

**उदयति** । प्रकाशते ॥

**कृपया परया करिष्यमाणे**
**सकलांगं किल सर्वतोऽक्षि नेत्रे ।**

**प्रथमं श्रवसी समास्तृणाते**
**इति दैर्घ्येण विदन्ति रंगनेतुः ॥ ९८ ॥**

इक्षुचापत्वेन भ्रुवोरनुभवो वृत्तः । इदानीं त्रिभिः श्लोकैर्नेत्रेऽनुभूयेते । नेत्राभ्यां खलु सम्पूर्णशीतलकटाक्षणम् । करुणा कृत्स्ना नेत्राभ्यां खलु प्रदर्श्येत । करुणामयस्य रङ्गनेतुः सर्वाण्यङ्गानि नेत्रीक्रियन्त इव नेत्राभ्याम् । पुरुषोत्तमस्योत्तमाङ्गे मुखे उत्तमभागभूते नेत्रे सर्वाण्यङ्गानि चक्षुर्मयानि चिकीर्षतः । व्यापनशीलस्य विष्णोश्चक्षुषी अङ्गान्तराणि व्याप्य चक्षुर्मयानि कुर्वाते । सर्वतोऽक्षिमान् भवति विग्रहः । 'चक्षुष्मन्ति गतागतानि—' इत्युक्तं पूर्वम् । सर्वाण्यङ्गानि चक्षुष्मान्ति भवन्ति । सर्वाण्यङ्गानि स्नेहभरितानि कटाक्षयन्तीव । व्यापनव्यापारे प्रथमं कर्णे व्याप्नुत इत्यनुभवः । 'तमेकदृश्यं नयनैः पिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि । तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥' इति कुमारसम्भवसप्तमसर्गश्लोके ईश्वरद्रष्ट्रपौराङ्गनानां चक्षुरिन्द्रियान्तराणि प्रविष्टानीवेति वर्णितम् । अत्र चक्षुषी सर्वेतराङ्गाण्यभिव्याप्य चक्षुर्मयं विकुरुत इत्यनुभवः ।

**रङ्गनेतुर्नेत्रे** । लोचने । नेतुर्नेत्रे इति वैचित्र्यलाभो नेत्रशब्दप्रयोगेण । युक्तमिदं नेतुर्नेत्रयोः सर्वेतराङ्गानां नेत्रीकरणम् ।

**सकलाङ्गम्** । नयनं प्रधानम् । प्रधानमनु सर्वम् ।

**कृपया परया** । यदा सर्वाण्यङ्गानि चक्षुर्भवन्ति, सर्वतः कटाक्षणं लभ्येत । तथा च 'सर्वतोऽक्षिशिरोमुखम्' इतिवदनुभवः संपद्येत । इतः परा का कृपा भवेत् । परया कृपया चक्षुर्मयकृपाप्रसारणं सुलभम् ।

**सर्वतोऽक्षि** । 'सर्वतोऽक्षिशिरोमुखम्' इति विश्वरूपविषयवचनप्रत्यभिज्ञापनम् । अत्रैकैकमङ्गं सर्वतोऽक्षि भवतीति विशेषः ।

**करिष्यमाणे किल** । चिकीर्षिते इव ।

**प्रथमं श्रवसी समास्तृणाते** । प्रथमं कर्णयोः समीपं गत्वा तौ व्याप्नुत इव । नेत्रयोः कर्णान्तविश्रान्तत्वं सौन्दर्यलक्षणम् ।

**इति दैर्घ्येण विदन्ति** । सर्वाङ्गव्याप्त्या दीर्घवीक्षणमनोरथो दैर्घ्येण गम्यते ॥

**श्रवोनासारोधात्तदवधिकडोलायितगते**
**विशालस्फीतायद्रुचिरशिशिराताम्रधवले ।**
**मिथो बद्धस्पर्धस्फुरितशफरद्वन्द्वललिते**
**क्रियास्तां श्रीरङ्गप्रणयिनयनाब्जे मयि दयाम्** ॥ ९९ ॥

**श्रीरङ्गप्रणयिनयनाब्जे** । प्रकृष्टतमस्तोत्रभूतप्रणवाभिन्नश्रीरङ्गे निरतिशयप्रणयो भगवतः । श्रीरङ्गे परमपदादप्यतिशयिता रतिर्भगवत इति च स्मर्यते । निरतिशयरतिकरे स्थलविशेषे प्रीत्युत्फुल्ले नयनाब्जे ।

**श्रवोनासारोधात्तदवधिकडोलायितगते** । एकपार्श्वे श्रवणम् इतरपार्श्वे नासेत्युभयतो रुद्धमेकैकं लोचनं । उभयतो डोलायत इवैकैकं लोचनम् । श्रवोरोधेनाहतं पुनः प्रतिनिवृत्तं नासारोधेनाहन्यते । पुनर्निवृत्तं श्रवो धावतीव । एवं डोलायितत्वं लोचनमहसः । वाताहते सरसि पद्मानां डोलायितत्वं सम्भवि । करुणा चात्र वातः ।

**विशालस्फीतायद्रुचिरशिशिराताम्रधवले** । मुनिवाहनयोग्यनुभवः स्मार्यते ।

**मिथो बद्धस्पर्धस्फुरितशफरद्वन्द्वललिते** । मीनस्य स्फुरणरूपक्रीडनं स्वभावः । नयनयोर्मिथः स्पर्धा आश्रितशिशिरकटाक्षणे ; तत्कारणमनादिनिर्हेतुकसहजकारुण्यम् ।

**मयि दयां क्रियास्ताम्** । स्वस्मा आशीः प्रयुज्यते । 'आत्मैव ह्यात्मनो बन्धुः' ॥

**करुणामृतकूलमुद्रहैषा**
**प्रणमत्स्वागतिकी प्रसन्नशीता ।**
**मयि रङ्गधनोपकर्णिकाक्ष्णोः**
**सरितोर्वीक्षणवीचिसन्ततिः स्तात् ॥ १०० ॥**

लोचनयोर्दीर्घत्वमुक्तम् । उभयतो रुद्धत्वेन डोलायितत्वम् ; स्फुरच्छफरत्व-मञ्जत्वं चोक्तम् । इदानीं प्रवहत्कृपासरित्वं रूप्यते । स्वयं सरितौ पद्मे शफरे च भवतः । यथा लोचनयोः करुणाकूलमुद्रहत्वं तथात्राचार्यानुभव-स्यापि कूलमुद्रहत्वमिव ।

**करुणामृतकूलमुद्रहा अक्ष्णोः सरितोर्वीक्षणवीचिसन्ततिरु-पकर्णिकैषा** । 'स्रोतोवहां पथि निकामजलामतीत्य जातः सखे प्रणयवान् मृगतृष्णिकायाम्' इतिवद्वयमेतद्दिव्यनीरपानमपहाय वृथा विषयभोगमरीचि-का अन्विष्यामः । अस्मानासादयितुं प्लावयितुं च कूलमुद्रुजे भूत्वा वीचीः सन्तन्वाने दूरस्थमपि मां गृह्णीताम् । गङ्गायां मणिकर्णिकादिघट्ट इवेयमुप-कर्णिका ।

**प्रणमत्स्वागतिकी** । नयने कुशलसंप्रश्नचतुरे ।

**रङ्गधन** । 'मीलच्चक्षुषि वेल्लितभ्रुणि मुहुर्दत्तावमानाक्षरे' इति धन-वतोऽक्षिणी सावज्ञे स्याताम् । धनस्य तव स्वभावो विलक्षणः ।

**मयि स्तात्** । लोचने मां स्नपयतां पाययतां च । 'यद्यप्यहं लोचनाभ्यां तं न पिबेयम् ॥

**विलसति नासाकल्पवल्ली मुग्धेव रङ्गनिलयस्य ।**
**स्मितमपि तन्नवकुसुमं चुबुककपोलं च पल्लवोल्लसितम् ॥ १०१ ॥**

'अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू । कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्' इति प्राकृतामपि युवतिं वर्णयन्ति । अर्थिकल्पकस्य लावण्यधाम्नो भगवतो नासा सुन्दरकल्पवल्लीत्वेनानुमूयते ।

रङ्गनिलयस्य मुग्धा नासा कल्पवल्लीव विलसति कल्पवल्लीशोभां वहति ।

स्मितमपि तन्नवकुसुमम् । वल्ली च नाकुसुमिता । स्मितं कुसुममिव शोभते ।

चुबुककपोलं च पल्लवोल्लसितम् । चुबुकं च कपोलौ च पल्लववद्भासन्ते । 'यो यदिच्छति तस्य तत्' इति यदुक्तं भगवद्विषये तत्सत्यं तद्विग्रहावयवविषयेऽपि । बहुभिर्बहुधोल्लिख्येतालौकिकं रूपम् ॥

नयनशफरविद्धौ कर्णपाशावरुद्धौ
रुष इव लुटतोऽर्चिर्मञ्जरीरुद्गिरन्तौ ।
परिमिलदलकालीशैवलामंसवेला-
मनुमणिमकरोद्धौ रंगधुर्यामृताब्धेः ॥ १०२ ॥

कल्पवल्लीत्वेनोल्लेखः कृतः पूर्वश्लोके । कल्पवल्ली च क्षीराब्ध्युद्भवा । कार्यं कारणं च भगवानेक एव भवति । 'न तस्य प्राकृता मूर्तिः' इति भगवतो दिव्याया नासाकल्पवल्ल्याः अमृतस्वभावत्वात्सा अमृताब्ध्युद्भवा भवेत् । स्वावयवभूतनासाकल्पवल्ल्याः स्वयमेव कारणममृताब्धिर्भवति भगवद्विग्रह इति वर्ण्यते । रङ्गे विचित्राद्भुतानि नवनवानि प्रदर्शनीयानि रङ्गागतानाम् । नटश्च नवनवाद्भुतवेषं धरेत् । 'ज्योतींषि विष्णुः' 'नद्यः समुद्राश्च' इति नद्यः समुद्राश्च तद्वेषाः । अमृताब्धित्वेन भगवद्विग्रहः, शफरत्वेन नयने, कर्णौ मत्स्यग्रहणार्थं विततपाशत्वेन, अंसौ वेलात्वेन अलकाली शैवलत्वेन च रूप्यन्ते । 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत्' इतिवदयं सर्वं भवति । शफरादयोऽस्याब्धेरवयवाः । कुण्डले वर्ण्येते मकरिकात्वेन ।

रंगधुर्यामृताब्धेः । रङ्गस्य धुरं वहत्ययम् । अतो विचित्राब्धिरूपं प्रदर्शयति द्रष्टृदृष्टिचित्तापहरणाय ।

**मणिमकरोद्धौ**। उत्कृष्टरत्नमकरिके । 'भूषामयो मकरिका विविधान् विहारान्' इत्येतदनुभवानुकरणं वेदान्ताचार्यैः ।

**नयनशफरविद्धौ कर्णपाशावरुद्धौ** । अब्धौ अतिवेगं भ्रमतः । नयनपर्यन्तं धावने शफरभूतनयनाभ्यां विद्धे प्रतिनिवृत्य कर्णपर्यन्तं भ्रमन्त्यौ कर्णपाशरूपपाशेनावरुद्धयेते ।

**रुष इवार्चिर्मञ्जरीरुद्गिरन्तौ** । पाशावरोधेन सञ्जातरोष इव मञ्जरीरूपतेजांसि वमन्ति । 'ते ह्यन्यतेजोऽभिभवाद्वमन्ति ।'

**परिमिलदलकालीशैवलांसवेलामनु लुटतः** । अलकाल्यः शैवलमंसश्च वेला भवति । अंसवेलां लक्ष्यीकृत्य लुटतः । मकरिकारत्नकान्तयो लुटन्ति ॥

> **अधरमधुराम्भोजं तत्कर्णपाशमृणालिका-**
> **वलयमभि मामास्तां रंगेन्दुवक्त्रसराश्चिरम् ।**
> **नयनशफरं नासाशैवालवल्लरि कर्णिका-**
> **मकरमलकश्रेणीपर्यन्तनीलवनावलि ॥ १०३ ॥**

श्रीरङ्गराजमुखस्य सरस्त्वेनानुभवः । तत्राधरोऽम्भोजम्, कर्णौ मृणालवलये, नयने शफरौ ; नासा शैवालवल्ली, कर्णिका मकरः, अलकश्रेणयो नीलवनावल्यः ।

**अधरमधुराम्भोजम्** । पद्मताम्रोऽधरो मधुपूर्णः । तद्विशिष्टं पद्मसरः ।

**कर्णपाशमृणालिकावलयम्** । कर्णपाशेति न केवलं पाशशब्दमात्रम् । पाशाकारत्वमपि । कर्णपाशमेव मृणालवलय इव । तद्विशिष्टम् ।

**नयनशफरम्** । नयने मत्स्यौ, तद्विशिष्टम् ।

**नासाशैवालवल्लरि** । दीर्घश्यामा नासा शैवालवल्लीव भासते ।

**कर्णिकामकरम्** । कर्णाभरणे मकरौ । तद्विशिष्टम् ।

**अलकश्रेणीपर्यन्तनीलवनावलि** । अलकश्रेणयः परिसरवर्तिनीलवनानि ।

**तद्रंगेन्दुवक्त्रसरः** । प्रसिद्धमेवं गुणोपेतं रङ्गेन्दुमुखसरः ।

**चिरं मामभ्यास्ताम्** । चिराय मामभितो वर्तताम् । मामाधृत्य तिष्ठतु ॥

**रमयतु स मां कण्ठः श्रीरंगभर्तुरुदञ्चित-**
**क्रमुकतरुणग्रीवाकम्बुप्रलम्बमलिम्लुचः ।**
**प्रणयविलगल्लक्ष्मीविश्वम्भराकरकन्दली-**
**कनकवलयक्रीडासंक्रान्तरेख इव स्फुरन् ॥ १०४ ॥**

अमृताब्ध्यनुभवो मुखसरोऽनुभवश्च वृत्तः । इदानीं कण्ठस्याब्धिभवशंखत्वेन सरस्तीरवर्तिक्रमुकतरुणग्रीवतया चोपमितिः । तत्रस्थसूक्ष्मरेखात्रयस्य देवीकनकवलयमुद्रात्वनोल्लेखः ।

**उदञ्चितक्रमुकतरुणग्रीवाकम्बुप्रलम्बमलिम्लुचः** । क्रमुकग्रीवाशोभाचोरः ; शंखशोभाचोरश्च ।

**प्रणयविलगल्लक्ष्मीविश्वम्भराकरकन्दलीकनकवलयक्रीडासंक्रान्तरेखः** । देवीस्वयंग्रहे कण्ठाश्लेषे देवीकनकवलयैर्दत्तमुद्र इव । 'कण्ठाश्लेषे रमायाः ॥ ' इति श्रीशाङ्करानुभवः । 'रतिवलयसनाथे चापमासज्य कण्ठे । ' इति मन्मथवर्णनं कुमारसम्भवे । 'अशिथिलपरिरम्भैराहितामिन्दिरायाः कनकवलयमुद्रां कण्ठदेशे दधानः' इति श्रीवरदराजानुभवः ।

**स्फुरन्** । प्रकाशमानः । देवीवलयचिह्नैरधिकस्फुरणम् ।

**श्रीरंगभर्तुः स कण्ठः** । प्रसिद्धस्तादृशः कण्ठः ।

**मां रमयतु** । तिष्ठतु तद्रमणं देवीस्वयंग्रहादिना । मम रतिं कारयतु । यथा रतिं प्रापितस्तथा मां मोहं प्रापयतु ॥

**अधिष्ठानस्तम्भौ भुवनपृथुयन्त्रस्य कमला-**
**करेणोरालानावरिकरिघटोन्माथमुसलौ ।**
**फणीन्द्रस्फीतस्रग्व्यतिकरितसन्दिग्धविभवौ**
**भुजौ मे भूयास्तामभयमभि रंगप्रणयिनः ॥ १०५ ॥**

सर्वभूतेभ्योऽभयप्रदौ, सर्वभयप्रमथनदक्षौ भुजावनुभूयेते ।

**अधिष्ठानस्तम्भौ भुवनपृथुयन्त्रस्य** । भुवनं चेतनाचेतनात्मकं विश्वम् । तदेवात्यन्तपृथुयन्त्रम् । भुवनभ्रमणयन्त्रम् । पृथुयन्त्रमिति पृथुसम्बन्धिन्याः पृथिव्याः पृथुयन्त्रमिति वैचित्र्यमप्यभिप्रेतं स्यात् । भुवनभ्रामकपृथुयन्त्रस्याधारस्तम्भाविव भुजौ । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥' इति गीतं गीतान्ते भगवता । 'नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीमेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।' इति कविसार्वभौमः । यदि भगवद्भुजौ विश्वभ्रामणयन्त्रस्याधिष्ठानं भवेतां जगच्चक्रस्य भगवता भ्रामणं साधु समर्थ्येत । विश्वभ्रमाधिष्ठानं ब्रह्म भगवानित्येके वेदान्तिनः । यन्त्रे जगदारोप्य स्वेन जगतो भ्रामणं वक्ति भगवान् । न स्वस्यैव भ्रमं भ्रमणं वा । विश्वभ्रमाधिष्ठानं ब्रह्मेति ते । वयं तु ब्रह्मबाह्वोर्विश्वभ्रामणाधिष्ठानत्वं वर्णयामः । अधिष्ठानशब्देन, गीताश्लोकस्थयन्त्रशब्देन चैतच्चारु व्यज्यत इव ।

**कमलाकरेणोरालानौ** । मदश्चञ्चलत्वं च लोकप्रसिद्धश्रीस्वभावः । श्रीः करेणुत्वेन रूप्येत । करेणुः कमलिन्यामुद्दामं विहरेत् । करिणी कमला सरसिजवनं जिगमिषुर्भगवद्वक्षो विहाय । 'स्थानं यस्याः सरसिजवनं विष्णुवक्षःस्थलं वा' इति श्रीस्तुतौ । एतद्व्यज्यते कमलाशब्दोपादानेन । बाहुद्वयं कमलाया बहिर्गमनं रुणद्धि । काममुद्दामं धावनादिविहारमनुभवत्वियं तरुणेभी कमलाकरेणुर्भगवतः पृथुवक्षसि बाह्वोर्मध्ये । के मस्तके रेणुरस्या इति करेणुः ।

**अरिकरिघटोन्माथमुसलौ** । करेणुरित्युक्तम् । 'भार्या रूपवती शत्रुः' । तस्याः शत्रुत्वं शत्रुसम्पादकत्वेन । अहल्या पत्नी, इन्द्रः शत्रुः । सीता पत्नी, दशकण्ठः शत्रुः । यदि करेणुः कश्चिद्गजमाश्रयेत, ध्रुवं तद्-तदसहमाना बहवो गजाः शत्रवो भूत्वा संघशस्तं योधयेयुस्तां करिणीमपह-र्तुम् । एवमायोधनप्रसङ्गे यौ भुजौ करेण्वालानभूतौ, तावेव शत्रुनिरासक-मुसलाविति चारु प्रदर्श्यते । करेण्ववस्थितिस्थलपर्यन्तयोरेव मुसलौ भूत्वा शत्रुगजघटानां प्रवेशं निरुन्धतः । करवर्णने करेणुनिर्देशः, करिनिर्देशो व्यति-करितानिर्देशश्च चारुतामावहन्तीव । शत्रुमथनोक्तिश्चातिस्वरसा । 'यदर्थम-म्भोधिरमन्थि' 'निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य मां राक्षसेन विधिनोद्वह वीर्य शुल्काम्' इत्यादिकं भाव्यम् । मथनेन प्रियाप्राप्तिः, प्राप्ताया रक्षणं च ।

**फणीन्द्रस्फीतस्रग्व्यतिकरितसन्दिग्धविभवौ** । अधिष्ठान-मिति कथञ्चिद्भ्रमस्मारणं कृतम् । मत्तगजादिप्रस्तावश्च कृतः । एवं भूया-न्भ्रमोन्मादादिकथा । तदानुरूप्येण भुजयोः शेषभोगत्वेन, स्फीतस्रक्त्वभ्रा-न्तिविषयत्वं वर्ण्यत इत्यवधेयम् । कर्पूरालिप्तयोर्भुजयोर्भोगिभोगत्वेन , पुष्प-मालात्वेन च भ्रान्तिः सहजा । 'बाहुं भुजगभोगाभम्—'इत्यार्षवर्णनमत्र भाव्यम् । 'स्रग्भोगिभोगोपमम्' इति प्रबोधचन्द्रोदये ।

**रङ्गप्रणयिनः** । अस्मद्दुःखापायार्थं रङ्गप्रणयी । अस्मदभयप्रदा-नाय रङ्गशयनम् ।

**भुजौ मेऽभ्यभयं भूयास्ताम्** । सर्वभूतेभ्योऽभयम् । तावेवाभयं भवताम् । तद्दर्शनेनैवाभयं लभ्यते । न ताभ्यामभयप्रदर्शनदानाद्यपेक्षा ।

> **प्रतिजलधितो वेलाशय्यां विभीषणकौतुका-**
> **त्पुनरिव पुरस्कर्तुं श्रीरङ्गिणः फणिपुङ्गवे ।**
> **समुपदधतः कंचित्कंचित्प्रसारयतो भुज-**
> **द्वयमपि सदा दानश्रद्धालुदीर्घमुपास्महे ॥ १०६ ॥**

बाहौ भुजगभोगभ्रमो वर्णितः । 'बाहुं भुजगभोगाभम्—' इति प्रकरणस्मारणेन प्रतिशयनभूमिका स्मृतिमायाता । इयमपरा प्रतिशयनभूमिकेत्युत्प्रेक्ष्यते । विभीषणच्छन्दानुवर्तनार्थं सागरवेलायां दर्भानास्तीर्य महोदधिं प्रति शयितं प्रभुणा । विभीषणकौतुकमेव निमित्तीकृत्यात्रापि शयनं निर्वर्त्यते । पूर्वश्लोके बाह्वोरधिष्ठानत्वं वर्णितम् । अत्र दक्षिणबाहुनोपहितत्वं वर्ण्यते । यदधिष्ठानमभूत् तदत्रोपधानं भवति ।

**प्रतिजलधितः** । समुद्रमभि । श्रीरङ्गे पतिपत्न्योरभेदेन महोदधिकावेर्योरभेदानुसन्धानम् ।

**वेलाशय्याम्** । सागरतीरे शयनम् ।

**विभीषणकौतुकात्** । अत्रापि विभीषणमनोरथानुवर्तनमेव निमित्तम् ।

**पुनः पुरस्कर्तुमिव** । पुनरपि बहुमन्तुमिव ।

**फणिपुङ्गवे** । तत्र फणिपतेः स्मरणमात्रमुपमानत्वेन 'बाहुं भुजगभोगाभम्—' इति । तत्सम्बन्धस्य मानुषमाननाविरुद्धत्वात् । अत्र फणिपतेरेव शयनं भवति । 'आत्मानं मानुषं मन्ये—' इति नात्र मानुषत्वाव्यभिचारनिर्बन्धः । पुङ्गवस्यात्र श्रेष्ठवाचकत्वम् । न पुङ्गवरूपवृषभमारूढोऽयम्, किंतु फणिश्रेष्ठं फणिपुङ्गवशय्यामारूढः ।

**कञ्चित्समुपदधतः** । दक्षिणं भुजमतिमनोहरमुपधानीकृतवतः ।

**कञ्चित्प्रसारयतः** । वामं बाहुमाजानु प्रसारितवतः ।

**श्रीरङ्गिणः सदा दानश्रद्धालुदीर्घं भुजद्वयमपि** । भुजयोरायतत्वमर्थिसमीपं गत्वा दानेच्छां प्रकटीकर्तुमिव । दातव्यं दातव्यमिति श्रद्धया दीर्घीभवत इव भुजौ । समीपमागत्य दत्तमपि वयं सगर्वं तिरस्कुर्याम, न प्रतिगृह्णीयामेति श्रद्धालुः सो न वेद । वयं प्रतिगृह्णीयामेति सो श्रद्धत्ते । तच्छ्रद्धयाऽयं दीर्घं प्रसारयति भुजावस्मत्समीपम् । श्रद्धादैर्घ्याद्भुजौ दीर्घी-

भवत इव । अस्य दातुः प्रतिग्रहीतरि श्रद्धा । अप्रतिग्रहे मोघाशो भवेदयं श्रद्धालुः । न याच्ञाया मोघत्वभयं यथा लोके । दित्सा मोघा भवेदिति बिभेति ।

**उपास्महे** । अस्मत्समीपमस्मासु श्रद्धयायातौ भुजौ । न ततो दूरगमनमुचितम् । अतस्तत्समोप एव स्थित्वा भजामहे ॥

**कुसुमभरालसौ स्फटिकवेदिशयौ**
**विटपावमरतरोः परं परिहसत्पृथुरङ्गभुजः ।**
**बहुमणिमुद्रिकाकनककङ्कणदोर्वलयैः**
**किसलयि दोर्द्वयं फणिनि निर्भरसुप्तमिमः ॥ १०७ ॥**

दानश्राद्धावित्युक्तम् । पारिजातस्य शाखे इति भुजावुत्प्रेक्ष्येते । पारिजातस्य श्रीप्रदत्वं प्रसिद्धम् ।

**कुसुमभरालसौ** । कुसुमभारेण नम्रौ निश्चेष्टौ । निद्राणस्य भगवतो भुजयोः सहजसत्त्वगुणप्रदर्शनलाभायैतद्विशेषणम् ।

**स्फटिकवेदिशयौ** । स्फटिकवेद्यां शयाते विटपौ । कुसुमभरपीडितौ वत्साविव तत्र शयाते । शयानस्य पुरुषस्य भुजयोः साम्यं शयानशाखाभ्याम् । स्फटिकभूमिलाभे शिशयिषा सहजा ।

**अमरतरोर्विटपौ** । पारिजातशाखे । वासुदेवतरू रङ्गशाय्यमरतरुः ।

**परं परिहसत** । ततोऽपि बन्धुरम् ।

**रङ्गभुजः पृथु दोर्द्वयम्** । रङ्गरसिकस्य । भुजवर्णने भुज इति षष्ठ्यन्तपदस्य ग्रहणं वैचित्र्यावहम् । रङ्गभुग्घास्यरसपूर्णः स्यात् । रङ्गे हास्यरसस्यावश्यकता । रङ्गानुभवितुर्भुजद्वयं परिहसति । उचितमिदम् ।

**फणिनि निर्भरसुप्तम्** । स्फटिकवेदिकास्थाने फणी । कुसुमभरेण सुप्ताविवालसौ विटपौ । इमौ भुजौ तु निर्भरसुप्तौ इति वैजात्यस्फोरणमिव । न भाराक्रान्तिसञ्जातश्रमेण स्वापः , यथा विटपयोः । किं तु नैर्भर्येण स्वाप

इति विशेषद्योतनम् ।

**बहुमणिमुद्रिकाकनककङ्कणदोर्वलयैः किसलयि दोर्द्वयम्** । रत्नस्वर्णभूषणैः किसलयितम् ।

**इमः । प्राप्नुमः ॥**

**मद्रक्षाव्रतकौतुके सुकटके विक्रान्तिकर्णेजपे**
**शार्ङ्गज्याकिणकर्कशिम्नि सुमनःसम्मोदने मार्दवे ।**
**दोर्द्वन्द्वं बहुशः प्रलोभ्य कमलालीलोपधानं भव-**
**त्तच्चित्रालकमुद्रितं विजयते श्रीरङ्गसंसंगिनः ॥ १०८ ॥**

दोर्द्वन्द्वं प्राप्नुम इत्युक्तम् । मदागमनकांक्षि बद्धकङ्कणमिवास्ते तद्द्वन्द्वम् । मद्विरोधिनिरसनसामर्थ्यं मां श्रद्धापयितुं ज्याकिणाद्यङ्कानपि प्रदर्शयति । मम मातुरुपधानं च भवति श्रियः । एवं भूयो मदाश्रयणौचित्यप्रदर्शनं दोर्द्वन्द्वेनेत्युच्यते ।

**मद्रक्षाव्रतकौतुके सुकटके** । स्वहस्तधृतकनकवलयानि लक्ष्म्यै प्रदर्श्य 'इमानि त्वत्पुत्ररक्षणव्रतार्थं निबद्धानि कङ्कणानीति' तां रञ्जयति ।

**विक्रान्तिकर्णेजपे शार्ङ्गज्याकिणकर्कशिम्नि** । मणिबन्धे ज्याघाताङ्कं स्वपराक्रमसूचकं तस्यै वीरपत्न्यै प्रदर्श्य तां प्ररोचयति, सन्तोषयति ।

**सुमनःसम्मोहदे मार्दवे** । पुष्पहास इति नाम दुहानं मार्दवमस्ति विष्णोः । कुसुमस्रगिव मृदु दोर्द्वन्द्वम् । तन्मोहदं दोर्द्वन्द्वम् । उपधानौचित्याय मार्दवप्रदर्शनम् । ज्याघाताङ्ककर्कशस्येदृशं मार्दवम् ।

**दोर्द्वन्द्वं बहुशः प्रलोभ्य** । एवं बहुभिर्हेतुभिः पत्नीं सन्तोष्य ।

**कमलालीलोपधानं भवत्** । दोर्द्वन्द्वं कमलाया उपधानं भवति । कमलेति सौकुमार्यातिरेकसूचनम् । तदाभिरूप्याय सुमनःसम्मोहदमार्दववर्णनम् । पूर्वोक्तप्रलोभनमुपधानत्वाङ्गीकाराय ।

**तच्चित्रालकमुद्रितम्** । न कनकवलयमुद्राः ; ज्याघाताङ्का वा चित्राः । किं तु कमलायाश्चित्रालकमुद्रा अति विचित्राः ।

**श्रीरङ्गसंसङ्गिनः (दोर्द्वन्द्वं) विजयते** । श्रीरङ्गं संसङ्गश्च मद्रक्षणार्थम् । एवंभूतं दोर्द्वन्द्वं सर्वोत्कर्षेण वर्तते । 'असङ्गो न हि सज्जते' इत्युक्तोऽसङ्गः पुरुषः श्रीरङ्गसंसङ्गी । न केवलं सङ्गी । किं तु संसङ्गी ॥

**भवार्तानां वक्त्रामृतसरसि मार्गं दिशदिव**
**स्वयं वक्त्रेणेदं वरदमिति सन्दर्शितमिव ।**
**कराम्भोजं पङ्केरुहवनरुषा पाटलमिव**
**श्रयामि श्रीरङ्गेशयितुरुपधानीकृतभुजम् ॥ १०९ ॥**

न केवलं लक्ष्म्या उपधानम् । स्वस्योपधानीभवति दक्षिणबाहुः । तेन च वक्त्रमंगुल्या प्रदर्श्यत इव । वक्त्रं चामृतसरः । तापत्रयार्ता भविनो नितान्तं तृषितास्तद्दाहशमनायाध्यात्मामृतपानं तीव्रमपेक्षन्ते । तद्रसपूर्णं सरो वक्त्रम् । ग्रीष्मसमये आतपतप्तानामध्वगानां जनानां मार्गसमीपस्थसरसः सत्त्वावबोधनायांगुलीचिह्नाङ्किता दारुस्तम्भा मार्गे निवेश्यन्ते राज्याधिकारनियुक्तैः । अयं करुणामयः सौशील्यवात्सल्यनिधी रङ्गराजः स्वहस्तेनैवाङ्गुलिचिह्नवद्दारुस्तम्भकार्यं निर्वहति । उपहिते दक्षिणभुजे दृष्टिपातं कुर्वन्मुखं कटाक्षरूपेङ्गितेनायं दक्षिणहस्तो वरदहस्त इति ज्ञापयतीव । एवं परस्परमहिमोपकारादिसूचनमङ्गद्वयेनेति विचित्रोऽनुभव आचार्याणां कं वा न वशीकुर्यात् । 'इङ्गितज्ञा हि कोसलाः' । नटस्याङ्गुल्या नयनादिना च भावप्रदर्शनकौशलं सहजम् । अयं कोसलदैवतम् । अयं रङ्गनटः ।

**भवार्तानाम्** । संसारघर्मतप्तानाम् ; संसाराध्वपरिश्रान्तानाम् ।

**वक्त्रामृतसरसि** । उत्फुल्लपङ्कजशीततटाके भगवद्वक्त्रे ।

**मार्गं दिशदिव** । मार्गमुपदिशदिव । भगवद्दिव्यमङ्गलविग्रहोत्तमाङ्गस्य भगवद्धस्तरूपगुरोरुपदेशेनैव गम्यत्वम् । स्वयमेव स्वां तनुं विवृणुते ।

स्वयमित्यत्राप्यन्वेति ।

**स्वयं वक्त्रेणेदं वरदमिति सन्दर्शितमिव** । दक्षिणहस्तस्य वरदत्वं सन्दिश्यते मुखेनैव । अस्य गुरोर्मौनं व्याख्यानम् । तमसः पारं दर्शयतीत्यत्रेव दर्शनफलकोपदेशः । 'सन्दर्शनादकस्माच्च' 'कृष्णसन्दर्शनं मह्यं कथं स्यादिति चिन्तयन्' इत्यादाविव सन्दर्शनशब्दग्रहणं भगवद्विग्रहविषयं ।

**श्रयामि श्रीरङ्गेशयितुः कराम्भोजं पङ्केरुहवनरुषा पाटलमिव** । ताम्रवर्णो दृश्यते हस्तः । अम्भोजसदृशहस्तस्ताम्रः । रक्तत्वं रोषसूचकम् । यदि रोषरक्तो हस्तः कथं स आश्रयणार्हो भवेदित्याशङ्कायाम्—उच्यते । सत्यं सरोषो रक्तहस्तः । किं तु तस्य रोषस्य विषयः पङ्केरुहवनम् । पङ्कजवनजिगीषयायं पाटलिमा । न भेतव्यमस्माभिः । एतद्व्यज्यते पङ्केरुहेत्यादिना ।

**उपधानीकृतभुजम्** । इदमुपधानीकरणमेव हेतुः पूर्वार्धवर्णितोल्लेखद्वयेऽपि । एतदुपाधिकमेव तदुल्लेखद्वयम् ॥

> **किरीटं श्रीरङ्गेशयितुरुपधानीकृतभुजो**
> **विधीशाधीशत्वाद्धटत इति संस्पृश्य वदति ।**
> **निहीनानां मुख्यं शरणमिति बाहुस्तदितरः**
> **स्फुटं ब्रूते पादाम्बुजयुगलमाजानुनिहितः ॥ ११० ॥**

दक्षिणबाहोरुपधानीकरणेनान्यदपि व्याख्यातं भवति । यद्यपि मौननियमोऽस्ति, 'अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः' इत्यवचनेनाङ्गविन्यासविशेषमात्रेणैव भावप्रदर्शनं नटनटीस्वभावः । अयं नटाग्रणी रङ्गनटः । अवाक्यप्ययं वदति , स्फुटं च वदति इत्युच्यते ।

**श्रीरङ्गेशयितुरुपधानीकृतभुजः** । उपहितो दक्षिणहस्तः । यथा वाग्बद्धो मौन्यपि सन्वदतीव, तथा निद्राणोऽपि वदतीति व्यज्यते श्रीरङ्गेशयितुरिति वचनव्यक्त्या ।

किरीटं संस्पृश्य वदति । सम्यक्स्पृष्ट्वा कथयति ।

विधीशाधीशत्वाद्धटेत । किरीटस्पर्शेनेदमुच्यत इव । किरीटस्पर्शेन तस्यौचित्यं प्रदर्श्यत इव । किरीटौचित्यं तु निरङ्कुशेशितृत्वेन । अधिरुपर्यर्थकः । ईशोपरीशत्वम् । परत्वसूचकः किरीटस्पर्शी दक्षिणभुजः ।

आजानुनिहितः । नायमुपहितः, किं तु निहितः । निहितोऽयं चरणयुगलनिधिं प्रदर्शयति ।

तदितरो बाहुः । वामबाहुर्वामानामस्माकं शरण्यं दर्शयति ।

पादाम्बुजयुगलं निहीनानां मुख्यं शरणमिति ब्रूते । पादौ प्रदर्श्येमौ नीचनीचानां वास्तवं शरणमिति ब्रवीति । नीचानामपि सुलभत्वप्रदर्शनमत्र यथोत्तमानामुपर्युत्तमत्वं पूर्वार्धे । मुख्ययोरापि मुख्यतरत्वं तत्र । अत्र निहीनानां मुख्यत्वम् तत्र किरीटप्रदर्शनम् । अत्र पादप्रदर्शनम् । मुख्यमिति नेदमौपचारिकं मन्तव्यम् । वास्तवमिदम् , सर्वैः श्रद्धेयमिति व्यज्यते । मुख्यं नामुख्यमौपचारिकं शरणम् । पूर्वार्धोक्ताधिशब्दस्थानेऽत्र मुख्यशब्दः । नितरां हीना निहीना अकिञ्चनाः ॥

**मलयजशशिलिप्तं मालतीदामतल्पं**
**सुमणिसरवितानं कौस्तुभस्वस्तिदीपम् ।**
**दनुजवृषविषाणोल्लेखचित्रं च लक्ष्मी-**
**ललितगृहमुपासे रंगसर्वंसहोरः ॥ १११ ॥**

'मन्दिरमिन्दिरायाः' इति वक्षोऽनुभवः श्रीवैकुण्ठस्तवे । 'अन्तः पुरं जलधिराजकुमारिकायाः' इति वक्षोवर्णने श्रीमदप्पयदीक्षिता वरदराजस्तवे । अत्र लक्ष्म्याः शय्यागृहत्वेन वक्षोऽनुभवः । पूर्वश्लोके पादयुगलं शरणमित्युक्तम् 'शरणं गृहरक्षित्रोः' । अस्मद्रक्षितृत्वरूपशरणत्वमुक्तं तत्र । गृहत्वरूपशरणत्वमत्रोच्यते । बाहुद्वयवर्णनानन्तरं तन्मध्यवक्षोवर्णनम् ।

मलयजशशिलिप्तम् । चन्दनकर्पूराद्यनुलेपनविशिष्टम् ।

**मालतीदामतल्पम्** । पुष्पमयशय्यावत् । 'तस्याः पुष्पमयी शरीरलुलिता शय्या' । अनुलेपनोपरि पुष्पमालाः ।

**सुमणिसरवितानम्**। महार्घरत्नसरैरलंकृतं वक्षः । खट्वावितानलम्बमानमणिसराविशिष्टत्वेनोल्लेखः ।

**कौस्तुभस्वस्तिदीपम्** । जीवमणिदीपवत् । कौस्तुभाश्च सोदराः । पुत्रा वा ।

**दनुजवृषविषाणोल्लेखचित्रम्** । क्रीडागृहे वृषविषाणादयो निवेश्येरन् । तल्लेखचित्राणि च तत्र स्युः । वृषासुरादीनां विषाणानि भगवद्वक्षसि लग्नानि । एतच्छ्लोकस्थविचित्रोल्लेखा आचार्याणां चित्तमरञ्जयन्निव । उल्लेखचित्रमित्ययं श्लोकोऽपि वर्ण्यते किमाचार्यैः ।

**लक्ष्म्या ललितगृहं रंगसर्वंसहोर उपासे** । लक्ष्म्या भोगशयनमन्दिरमिदं भगवद्वक्षः । सर्वधुरन्धरं सर्वसाधनक्षममिदम् । रङ्गे विचित्राद्भुतदर्शनानि प्रदर्शनीयानि रङ्गधुरन्धरेण । विचित्रशयनगृहप्रदर्शनमत्र ॥

**हारस्फारितफेनमंशुलहरीमालर्द्धि मुक्ताफल-**
**श्रेणीशीकरदुर्दिनं तत इतो व्याकीर्णरत्नोत्तरम् ।**
**आविःकौस्तुभलक्ष्म रङ्गवसतेर्निःसीमभूमाद्भुतं**
**वक्षो मन्दरमथ्यमानजलधिश्लाघं विलोकेमहि ॥ ११२ ॥**

अमृतमथनप्रदर्शनमत्र रङ्गनेत्रा । शयनमन्दिरत्वेनानुभवः पूर्वश्लोके । अत्र मन्दरमथ्यमानोदधित्वेनानुभवो वक्षसः । तच्च प्रेंखोलपर्यङ्किका भवति ।

**हारस्फारितफेनम्** । मुक्ताहाराः फेनायन्ते ।

**अंशुलहरीमालर्द्धि** । विशालनीलवक्षसः कान्तयो नीलतरङ्गायन्ते ।

**मुक्ताफलश्रेणीशीकरदुर्दिनम्** । मुक्ताः शीर्यमाणजलकणवत् दृश्यन्ते ।

**व्याकीर्णरत्नोत्करम्** । मथिताद्रत्नाकरादुत्कीर्यमाणरत्नानीवात्रो-

त्कीर्णरत्नानि ।

**आविःकौस्तुभलक्ष्मि** । किं रत्नैरन्यैः ? कौस्तुभरत्नमाविर्भवति । स्त्रीरत्नं लक्ष्मीरप्याविर्भवति ।

**मन्दरमथ्यमानजलधिश्लाघम्** । 'ययौ वक्षःस्थलं हरेः' इति समुद्रमथनलब्धाया लक्ष्म्या वक्षःस्थलगमनमुक्तम् । अत्र वक्षस एव मथनम् तत्रैव लक्ष्म्याविर्भाव इत्युल्लेखः ।

**निःसीमभूमाद्भुतम्** । अस्य महिमविस्तारादीनामपरिच्छेद्यत्वम्; अद्भुतत्वं च ।

**श्रीरङ्गवसतेर्वक्षो विलोकेमहि** । न क्षीराब्धिवसतेः; किं तु श्रीरङ्गनिवासिनः ॥

**वक्षस्थल्यां तुलसिकमलाकौस्तुभैर्वैजयन्ती**
**सर्वेशत्वं प्रथयतितरां रंगधाम्नस्तदास्ताम् ।**
**कूर्मव्याघ्रीनखपरिमिलत्पञ्चहेती यशोदा-**
**नद्धा मौग्ध्याभरणमधिकं नः समाधिं धिनोति ॥ ११३ ॥**

वक्षस्थले परत्वं सौलभ्यमुभयं चानुभूयते । यथा लक्ष्मीकौस्तुभाद्यलंकृतं वक्षस्तथा यशोदानद्धग्राम्याभरणेनाप्यलंकृतम् । यथा लक्ष्म्या नित्ययोगः, तथा यशोदानद्धमालयाऽपि नित्ययोगः । किमिदं सौलभ्यम् । एतद्वीक्ष्य समाहितं भवति चेतः । सर्वमपि भयं शाम्यति ।

**वक्षःस्थल्याम्** । लक्ष्मीवासस्थानस्य स्त्रीत्वेन निर्देशः स्थलीति ।

**तुलसिकमलाकौस्तुभैः** । प्रत्येकं परत्वबोधनमेभिः । श्रियः-पतित्वेन पुरुषसूक्तप्रतिपाद्यत्वम् । कौस्तुभैर्जीवानां परमप्राप्यत्वं । एते-षामप्राधान्यं वैजयन्त्यपेक्षयेति सूच्यते तृतीयानिर्देशेन ।

**वैजयन्ती** । वनमाला पञ्चभूताभिमानितत्त्वम् । एतेन प्रकृ-तीश्वरत्वसूचनम् । 'पतिं विश्वस्य—' इति ।

**रङ्गधाम्नः सर्वेशत्वं प्रथयतितराम्** । भूतमालारूपबृहतीपताका सर्वेशत्वं सुतरां प्रथयति ।

**आस्तां तत्** । तत्तिष्ठतु ।

**यशोदानद्धा** । नेयं मुख्यमाता । गोपीयम् । तया नद्धा ।

**कूर्मव्याघ्रीनखपरिमिलत्पञ्चहेती** । इदमपि रञ्जयति लक्ष्मीम् ।

**मौग्ध्याभरणम्** । बालाभरणम् । ग्राम्याभरणम् ।

**नः समाधिमधिकं धिनोति** । अधिकं प्रीणात्यस्मन्मनः । नो भयं शमयति । निर्विशङ्कं करोति ॥

**कियान् भारो मम जगदण्डमण्डली-**
**त्यतृप्तितः कृशितमिवोदरं विभोः ।**
**रिरक्षिषोचितजगतीपरम्परां**
**परामिव प्रथयति नाभिपङ्कजम् ॥ ११४ ॥**

उदरनाभ्यनुभवः । प्रलयकाले उदरेऽण्डानां निक्षेपः । महापुरुषस्यास्योरसः कार्श्यं स्वभावः । अस्य विश्वनिगरणं च स्वभावः । उभयोर्हेतुहेतुमद्भाव उत्प्रेक्ष्यते । रक्षणसमर्थस्य कारुणिकस्य रक्ष्यन्यूनतया शोकः ; तत्प्रयुक्तकार्श्यं च ।

**जगदण्डमण्डली** । प्रलीयमानानि सर्वाण्यण्डानि ।

**कियान् भारो मम** । ममात्यल्पभारः । नालं भरो मम ।

**इत्यतृप्तितः** । एवं भारानलंबुद्धिप्रयुक्तशोकेन ।

**कृशितमिवोदरं विभोः** । अस्योदरं शोकेन सञ्जातकार्श्यमिव । विभोरिति विशेषणेनास्य सर्वव्यापिनो विश्वशरीरिणो जठरस्यातिबृहत्त्वौचित्यं सूच्यते । विभोः स्वकीयरक्षणव्यग्रतासूचनं च ।

**नाभिपङ्कजम्** । जठरस्य शोकं तत्स्थनाभौ स्थितं नालीकं शिशमयिषति । भूयो रजस्तस्मिन् पङ्कजे । रजश्च स्रष्टॄन् वेधसः सृजेत् ।

**रिराक्षिषोचितजगतीपरम्परां परां प्रथयतीव** । तीव्ररिरक्षिषापूर्त्यभावप्रयुक्त एव जठरस्य शोकः । रिरक्षिषापर्याप्तरक्ष्यजगत्सम्पादनेनैवोदरस्य शोकोऽपनुद्येत । तदुचितबृहत्तराण्डमण्डलीमन्यां विस्तारयति । प्रथ विस्तारे । परामित्यन्यार्थकः, उत्कृष्टार्थकश्च । पूर्वस्या बृहत्तरा । प्रथयतीत्यनेनापि पृथूकरणमुच्यते । 'नाभीपद्मश्च मानक्षममिव भुवनग्राममन्यं सिसृक्षुः' इत्युत्तरशतके । तत्र पादनाभ्योः स्पर्धा । अत्र स्वावयविभूतोदरशोकनिर्विवर्तयिषा नाभेः । 'विश्वं निर्गीर्य विबुधेश्वरजातकार्श्यम्—' इति वेदान्ताचार्याः । कृशितामित्यत्रस्थस्य विवरणं जातकार्श्यमिति ॥

**त्रिविधचिदचिद्वृन्दं तुन्दावलम्बि वलित्रयं**
**विगणयदिवैश्वर्यं व्याख्याति रंगमहेशितुः ।**
**प्रणतवशतां ब्रूते दामोदरत्वकरः किण-**
**स्तदुभयगुणाकृष्टं पट्टं किलोदरबन्धनम् ॥ ११५ ॥**

उदरस्थवलित्रयमनुभूयते । उत्तमस्त्रिय इव लावण्यधाम्नः पुरुषोत्तमस्य वलित्रयं चारु भवेत् । वलित्रयेणोदरं भागत्रयेण विभक्तमिव भाति । चितो नित्यमुक्तबद्धत्वेन त्रेधा विभक्ताः । अचितश्च प्रकृतिकालनित्यविभूतित्वेन । वलित्रयकृतविभागेषु त्रेधा विभक्ताश्चिदचितो निविशन्त इव । तुन्देन वलित्रयविभागेन चिदचिदैश्वर्याणि विभज्य गण्यन्त इव । सत्यपि सर्वलोकैकैश्वर्ये वलित्रयव्याख्यातेऽस्ति तत्रैवोदरे रेखान्तरम्, येन सर्वेश्वरस्य प्रणतवशता व्याख्यायते । सा च मात्रा यशोदयोलूखले दाम्ना बन्धनेन जनिता । एवं यत्रैश्वर्यप्रदर्शनं तत्रैव सौलभ्यकाष्ठाप्रदर्शनमपि ।

**तुन्दावलम्बि वलित्रयम्** । उदरावलम्बिन्यस्तिस्रो वलयः ।

**त्रिविधचिदचिद्वृन्दम्** । त्रैविध्यं चित्स्वचित्सु च । वृन्दमिति सर्वेषामत्रैव सत्त्वं द्योत्यते ।

**रङ्गमहेशितुरैश्वर्यम्** । सर्वचिदचिन्नियमनरूपमहैश्वर्यम् । 'सर्वस्य

वशी सर्वस्येशानः' इति श्रुतिः । तच्छ्रुतिप्रत्यभिज्ञापनं महेशितृशब्देन, तृतीयपादस्थवशताशब्देन च । यत्र सर्वेशितृत्वकीर्तनं तत्रैव सर्वस्य वशित्वकीर्तनं च । 'एकैश्वर्ये स्थितोऽपि प्रणतबहुफले' । तिष्ठतु तेभ्यः फलदातृत्वम् । तेषां तावद्वशो भवति यथा तैर्बन्धनं सहते ।

**व्याख्याति** । ऐश्वर्यख्यातिं व्याख्याति ।

**दामोदरत्वकरः किणः** । 'दामानि लोकनामानि भान्ति यस्योदरान्तरे । तेन दामोदरो देवः–' इति वचनमुदाहृतं सहस्रनामभाष्ये । मणिबन्धे इवोदरबन्धे किणः । यथा ज्याकिणः शत्रुविजयद्योतकस्तथायं दामकिण आश्रितकर्तृकज्याकिणपराजयद्योतकः । प्रणतैः पराजयः सौलभ्यविजयद्योतकः । द्वादशनामसु काष्ठाभूतं चरमं दामोदरनाम । तन्नाम दुग्धमनेन किणेन । नाम्ना यशः । 'ततः स दामोदरतां प्रययौ दामबन्धनात्' इति पराशरः ।

**प्रणतवशतां ब्रूते** । नात्र व्याख्यानापेक्षा, यथा पूर्वार्धोक्तविषये । स्पष्टमिदमाख्यायते दामकिणेन । आबालगोपालं प्रसिद्धं खलु दामोदरत्वम् । तत्किणदर्शने व्याख्यानं विनैव स्पष्टं दामोदरत्वं कथितं भवति । एतद्व्यज्यते 'ब्रूते' इति । 'दामोदरः सहः' इति सहस्रनामसु । दामबन्धतर्जनभर्त्सनादिसहनात्सह इत्यपि नाम सम्पादितम् ।

**तदुभयगुणाकृष्टं पट्टं किलोदरबन्धनम्** । गुणः पट्टो बध्येत विजयोत्कर्षसूचनार्थम् । अस्मिन्नुदरबन्धे एतैः परत्वसौलभ्यसूचकैर्गुणैर्विजयोत्कर्षपट्टबन्धवदिवाभात्युरुबन्धनम् । गुणैराकृष्य बध्यन्ते गुणाः । 'गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव' । गुणैराकृष्य बद्धं गुणपट्टमिव ।

> त्रयो देवास्तुल्यास्त्रितयमिदमद्वैतमधिकं
> त्रिकादस्मात्तत्त्वं परमिति वितर्कान्विघटयन् ।

**विभोर्नाभीपद्मो विधिशिवनिधानं भगवत-**
**स्तदन्यद्भ्रूभङ्गीपरवदिति सिद्धान्तयति नः ॥ ११६ ॥**

रङ्गमहेशितुरित्युक्तं पूर्वश्लोके । सर्वैश्वर्यं चोक्तम् । किरीटवर्णने विधीशाधीशत्वं श्रीरङ्गशायिनि घटत इत्युक्तम् । न प्रतिज्ञामात्रेण कश्चित् सिद्धान्तः साधितो भवेत् । एवमाक्षिप्ते नाभीपद्मो भगवत्परत्वं करतलामलकीकृत्य स्पष्टं निदर्श्य सिद्धान्तयतीत्युच्यते । बहवः पक्षास्त्रिमूर्तीनां परत्वविषये । 'आत्मैक्यं दैवतैक्यं त्रिकसमधिग(क)ता तुल्यतैक्यं त्रयाणामन्यत्रैश्वर्यमित्याद्यनिपुणफणितीरादिर्यन्ते न सन्तः ।' इति वेदान्ताचार्या इमं श्लोकं सर्वात्मनाऽनुगच्छन्ति । साधूक्तम् 'अनुकरोति कूरनाथसुतम्' इति ।

**त्रयो देवास्तुल्याः** । समत्वं तिसृणां मूर्तीनाम् । तेषां व्यक्तिर्बहुत्वेऽपि तुल्यत्वम् ।

**त्रितयमिदमद्वैतम्** । एकस्यैव तत्त्वस्य तिस्रो मूर्तयः प्रकाराः । 'एकैव मूर्तिर्बिभिदे त्रिधा नु' इति कालिदासः । तत्पक्षे व्यक्त्यैक्यम् ।

**अधिकं त्रिकादस्मात्तत्त्वं परम्** । न त्रिष्वन्यतमस्य परत्वम् । त्रिकाद्बहिर्भूतस्य तुरीयस्य परत्वम् ।

इति **वितर्कान्विघटयन्** । एवं बहुधा विप्रतिपत्तीः शमयन् ।

**विधिशिवनिदानम्** । ब्रह्मरुद्रावत्र पुत्रपौत्रत्वेन प्रत्यक्षीक्रियेते ।

**भगवतो विभोर्नाभीपद्मः** । नाभीपद्मेन भगवदितरयोः पुत्रपौत्ररूपावरत्वम् ; तयोस्तदुत्पन्नत्वतन्नियाम्यत्वादि च स्पष्टं निःसंशयं प्रदर्श्यते । भगवच्छब्दो विभुशब्दश्च निरङ्कुशैश्वर्यद्योतकौ ।

**तदन्यत्** । भगवदन्यमूर्तिद्विकम् ।

**भ्रूभङ्गीपरवत्** । तयोः परत्वं पूर्वपक्षितम् । न परत्वं तयोः ; किं तु भगवद्भ्रूभङ्गीपरवत्त्वमिति चारु प्रदर्श्यते । न परत्वम् , किं तु परवत्त्वम् ।

**इति सिद्धान्तयति नः ।** तिष्ठन्तु दर्शनस्थापका ऋषय आचार्याश्च । इयं नाभिरेव प्रबलतमेन प्रत्यक्षप्रमाणेनास्माकं सिद्धान्तयति । नाभिश्च मध्यस्था । मध्यस्थोक्तेः श्रद्धेयत्वम् । शब्दश्च प्रथमं नाभेरुत्पद्यते । हार्दोऽयमुपदेशः । 'विश्वेशार्धेशत्वं घटत इति संस्पृश्य वदति' इति किरीटविषयश्लोके उपपत्तिमात्रोपदेशः । न करबदरसमानं प्रत्यक्षनिदर्शनम् ॥

**गर्भे कृत्वा गोप्तुमनन्तं जगदन्तर्मज्ज-**
**द्भ्रम्या वाञ्छति साम्यं ननु नाभिः ।**
**उत्क्षिप्यैतत्प्रेक्षितुमुद्यद्भ्रमिभूयं**
**नाभीपद्मो रंहति रङ्गायतनाब्धेः ॥ ११७ ॥**

कथं भगवतः परत्वसिद्धान्तनम् । पुत्रपौत्रौ भगवतोऽपि व्यापकौ स्याताम् । पितुः परः पुत्रः पौत्रश्च भूयो दृश्यते । न पुत्रपौत्रमात्रत्वादवरत्वनिर्णयः साधीयान् । एवमाक्षिप्ते तत्कार्यभूतसृष्टिप्रलयाविममेव निर्वर्तयतीत्युच्यते । यदि नाभिरेव 'गम्भीरत्वात्क्वचन समये गूढनिक्षिप्तविश्वा—' इति प्रलयाधारा, यदि च तस्या नालीकं प्रलीनं जगदुद्धृत्य स्रष्टुं समर्थं ध्रुवं भगवतैव सृष्टिप्रलयौ निर्वर्त्येते इति दृढं निश्चीयेत । अतस्तत्प्रदर्श्यतेऽत्र ।

**अनन्तं जगत् ।** उपरिभागे भोगविभूत्यान्तवत्त्वं जगतः । इतरथाऽनन्तवत्त्वमेव ।

**गर्भे कृत्वा गोप्तुम् ।** प्रजायां मातुरिव वात्सल्यं द्योत्यते गर्भ इति । गोप्तुमिति प्रलयस्यापि कृपाकार्यत्वं द्योत्यते । अन्तर्मज्जद्भ्रम्या साम्यं नाभिर्वाञ्छति ननु, किं न वाञ्छति । नाभिरावर्त इव दृश्यते । मज्जज्जगदनुमिमङ्क्षतीव नाभिः ।

**एतन्मग्नं जगदुत्क्षिप्य ।** तत् द्रष्टुमुपरि निर्गच्छद्भ्रमिसाम्यं भजते नाभीपद्मम् । भ्रमिभूयं भ्रमिसादृश्यम् । रंहति, गच्छति । नामरूपान्तरप्रतिपत्तिरूपसृष्टिसन्दर्भे यो रंहतिशब्दप्रयोगः स तार्तीयप्रथमसूत्रस्मारकः ।

'तदन्तरप्रतिपत्तौ रंहति' इति ।

**रङ्गायतनाब्धेः** । इदं सर्वं श्रीरङ्गनाथसमुद्रे ॥

**मदमिव मधुकैटभस्य रम्भा-**
**करभकरीन्द्रकराभिरूप्यदर्पम् ।**
**स्फुटमिव परिभूय गर्वगुर्वोः**
**किमुपमिमीमहि रङ्गकुञ्जरोर्वोः ॥ ११८ ॥**

नाभेरावर्तौपम्यवर्णनं कृतम् । तदध ऊर्वोरवतीर्य तदौपम्यान्वेषणवर्णनादिकं बह्वपायमत्यन्तसाहसम् । कुञ्जरोऽयं रङ्गकम्रः । अस्योरू अत्यन्तमत्तौ । यथा मधुकैटभरूपप्रबलतमशत्रोर्मदमपनिन्यतुस्तथा स्वोपमान्वेषिणः सर्वान् परिभावयतः । रम्भाकरभनागनासाञ्जित्वा प्रवृद्धगर्वमदावृतौ दृश्येते । यदि वयं तदौपम्यान्वेषणवर्णनादौ प्रवर्तेमहि ध्रुवं वयमपि परिभूयेमहि । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति समाधिकरहितयोरनयोर्निरुपमत्वमेव कथयामः ।

**मदमिव मधुकैटभस्य रम्भाकरभकरीन्द्रकराभिरूप्यदर्पं स्फुटमिव परिभूय** । मधुकैटभरूपप्रबलशत्रू दण्ड्यौ । निःसमाभ्यधिकेनेश्वरेण साम्यमन्विष्यतां सर्वेषामपि गर्वः शमयितुं योग्य इति व्यज्यते ।

**गर्वगुर्वोः** । स्वभावतो गुरू ऊरू गर्वेण गुरू इत्युत्प्रेक्ष्यते ।

**किमुपमिमीमहि** । साम्यान्वेष्टारः सर्वेऽपि परिभूयन्ते । अस्माकं तदुपमानान्वेषणप्रवृत्तिः केवलं परिभवमेवापादयेत् । अतिदृप्ते मत्ते इमे ऊरू । तत्साम्यवर्णनं ध्रुवं न सहेयाताम् । अतो विरमामस्तत्प्रयत्नात् ॥

**कटीकान्तिसंवादिचातुर्यलीला-**
**लसद्रत्नकाञ्चीकलापानुलेपम् ।**
**महाभ्रंलिहन्मेरुमाणिक्यसानू-**
**रिवाभाति पीताम्बरं रङ्गबन्धोः ॥ ११९ ॥**

समुद्रौपम्यं वर्णितं रङ्गराजस्य तत्राभिवर्णने । निरुपमत्वं वर्णितं मत्तयोरूर्वोः । अत्र मेघत्वेन रङ्गराजं, पीताम्बरं च मेरुमणिमयसानुत्वेन चोत्प्रेक्ष्येते । स्वर्णवर्णमेरुसादृश्यं पीताम्बरस्य । माणिक्यखचितसानोरौपम्यमुपरिभागे रत्नकाञ्चीपरिवेष्टितस्य पीताम्बरस्य । पीताम्बरेण लीढो मेघश्यामविग्रहः ।

**कटीकान्तिसंवादिचातुर्यलीलालसद्रत्नकाञ्चीकलापानुलेपम्।** सुन्दरबाहुविषये श्रीमद्रकुलभूषणवर्णनरीत्यनुसारः स्पष्टः । न स्पर्धा क्रियते किं त्वेकदेशसंवादित्वमात्रम् । अतस्तस्य चातुर्यम् । न स्पर्धते यथा रम्भादिरूरुभ्याम् । विनयचातुर्येण भगवद्विग्रहे स्थिरसंश्लेषं लभते ।

**महाभ्रंलिहन्मेरुमाणिक्यसानूरिवाभाति पीताम्बरम्।** रङ्गराजविग्रहस्योपमानभूताभ्रस्य महत्त्वम् ।

**रङ्गबन्धोः।** संवादित्वमात्रमनोरथरूपविनयेन बन्धुर्भवति रङ्गकुञ्जरः। सर्वोऽपि दर्पः प्रशान्तो विनयप्रदर्शनेन । स्वजनो बन्धुर्भवतीव ।

**मर्मस्थलांशुपरिवेष इवाम्बुराशेः**
**सन्ध्याम्बुवाहनिकुरुम्बमिवाम्बरस्य ।**
**शम्पाकदम्बकमिवाम्बुमुचो मनो नः**
**पीताम्बरं पिबति रङ्गधुरन्धरस्य ॥ १२० ॥**

पुनरपि श्रीरङ्गराजस्य समुद्रत्वेनानुभवः । भगवन्नीलविग्रहे पीताम्बरं सागरे सौवर्णस्थलकान्तिपरिवेष इव, सन्ध्यारक्तमेघमालेव, विद्युन्मालेव च भातीत्यनुभवः ।

**अम्बुराशेर्मर्मस्थलांशुपरिवेष इव।** नीलो गम्भीरो कान्त्यम्मः कल्लोलो भगवानम्बुराशिः । तत्र स्वर्णस्थलीकान्तिपरिवेषवद्भाति स्वर्णवर्णमम्बरम् ।

**सन्ध्याम्बुवाहनिकुरुम्बमिवाम्बरस्य।** नीलं नभः । तत्र सन्ध्यारक्तमालेव ।

**अम्बुमुचः शम्पाकदम्बकमिव** । नीलमेघे विद्युन्मालेव । अम्बुमुच इति वर्षुकदशापन्नमेघग्रहणम् । तदानीमेव विद्युन्मालावत्त्वसम्भवः ।

**पीताम्बरं पिबति नो मनः** । एवं स्थितं पीताम्बरम् । मनः पीताम्बरपातृ इति पीताम्बरं मनःपातृ इति वा स्यात् । अम्बरं पीतं येन तन्मम मनः पिबतीति वा , तन्मम मनः कर्म पिबतीति वा । पीताम्बरं पिबतीति पीताम्बरस्य कर्मत्वेऽधिकं स्वारस्यमिव । अम्बरपायि मन्मनः पिबति । 'आकाशवत्सर्वगतश्च', इत्यंबरतुल्यबृहद्गात्रस्याच्छादकं वसनं ध्रुवं पीताम्बरसंज्ञां भजेत । मनसा पानवर्णनं स्वरसम् । 'लोचनाभ्यां पिबन्निव ' ।

**रङ्गधुरन्धरस्य** । रङ्गधुरन्धरेण प्रधाननटेन बहुविचित्रवेषवर्णादिपरिग्रहः क्रियेत । स्वर्णकान्त्यावृतनीलसमुद्रमिव, सन्ध्यारक्तनीलनभ इव विद्युन्मालावृतकृष्णमेघमिव चात्मानं विचित्रं विचित्रं दर्शयति रङ्गनिर्वाहको नटः ॥

> **वैभूषण्यां कान्तिराङ्गी निमग्ना**
> **विष्वद्रीची कापि सोन्मादवृत्तिः ।**
> **जाने जानुद्वन्द्ववार्ताविवर्तो**
> **जातः श्रीमद्रंगतुंगालयस्य ॥ १२१ ॥**

'आङ्गी निसर्गनियता त्वयि हन्त कान्तिर्नित्यं तवालमियमेव तथाऽपि चान्या । वैभूषणी भवति कान्तिरलंतरां सा हे पुष्कलैव निखिलाऽपि भवद्विभूतिः ॥ ' इति श्लोको भाव्यः ।

**आंगी कान्तिः** । अवयवेभ्यः प्रवहन्ती शोभा ।

**वैभूषण्याम्** । (कान्तौ) आभरणशोभाप्रवाहे ।

**निमग्ना** । मज्जन्ती ।

**विष्वद्रीची** । सर्वत्र व्यापिनी । कान्तिप्रवाहे कान्तिप्रवाहस्य पतने वेगाधिक्यम् । अन्तर्गता मग्नाऽङ्गकान्तिः सर्वत्र व्याप्नोति ।

क्वापि सोन्मादवृत्तिः । प्रवाहस्योन्मादो नामावर्तरूपेण कुत्र-चिन्निर्गमनम् ।

जानुद्वन्द्ववार्ताविवर्तौ जातः । जानुद्वन्द्वनाम्ना व्यक्तीभवति । प्रवाहावर्तविवर्तरूपपरिणामाविव जानू । विवर्तश्च विचित्रपरिणामः । वार्तेति नाममात्रं जान्विति । कान्त्यावर्तपरिणाम एव वस्तुतः ।

जाने । उत्प्रेक्षे । नेदमाहार्यं, किं तु तत्त्वमेवेति जाने इति वा ।

रङ्गतुङ्गालयस्य । रङ्गनिवासिनो नटस्य जानुजङ्घादिशोभावश्या-पेक्षिता ॥

**श्रीरङ्गेशयजङ्घे श्रीभूम्यामर्शहर्षकण्टकिते ।**
**तत्केलिनलिनमांसलनालद्वयललितमाचरतः ॥ १२२ ॥**

इदानीं जङ्घानुभवः । श्रीरङ्गे शयानस्य जङ्घे श्रीभूमिभ्यां करकमलैर्ला-ल्येते । देवीकरस्पर्शे कण्टकिते भवतो जङ्घे । कण्टकितकमलनाला-विव दृश्येते । श्रीभूम्योर्लीलारविन्दे इव भगवतः पादकमले । तदर-विन्दसम्बन्धिनौ पद्मनालाविव जङ्घे ।

श्रीरङ्गेशयजङ्घे । शयानस्य जङ्घे पत्नीभ्यां संवाह्येयाताम् । रङ्ग-नटस्य नटनेन जङ्घाश्रान्तिसम्भवः ।

श्रीभूम्यामर्शहर्षकण्टकिते । पत्नीकरस्पर्शेन सञ्जातपुलके कण्ट-किते भवतः । अतः कण्टकनालसादृश्यम् ।

तत्केलिनलिनमांसलनालद्वयललितम् । तयोर्लीलारविन्दे भग-वतः पादपद्मे । तयोः पद्मयोर्मत्तपीवरनालयुगमिव जङ्घाद्वितयम् । तल्ल-लितं तद्विलासम् ।

आचरतः । वहतः । ललिताचरणं नटजङ्घयोर्युक्तम् ॥

**वन्दारुवृन्दारकमौलिमालागुञ्जानचेतः कमलाकरेभ्यः ।**
**संक्रान्तरागाविव पादपद्मौ श्रीरङ्गभर्तुर्मनवै नुवै च ॥ १२३ ॥**

पादाम्भोजानुभवं वन्दारुशब्देनोपक्रमते । तत्र सर्वेषां पराणामपि नमनं न्याय्यम् । लक्ष्मीकरस्पर्शेन जङ्घयोः पुलकहर्षावुक्तौ । तत्करयोगेन पादाम्भोजे रागसंक्रान्तिरुच्यते । 'तद्विप्रासो विपन्यवो जागृवांसः समिन्धते' 'विष्णोर्यत्परमं पदम्' पादपद्मविषयां तां श्रुतिं योजयामः । 'विपन्यव' इत्युक्तमेवोच्यते 'नुवै' इति ।

**वन्दारुबृन्दारकमौलिमालायुञ्जानचेतः कमलाकरेभ्यः । संक्रान्तरागाविव** । रक्ते पादपद्मे । तयोश्चैभिर्बहुतरो योगः, सततयोगो वा । तेभ्यः संक्रान्तरागे इव रक्ते पादपद्मे । प्रणतसुरकिरीटरत्नरागसंक्रान्तिः । युञ्जानानां भक्तियोगनिष्ठानां भगवत्पादाम्भोजविषयनिबिडरागः पादाम्भोजे संक्रामति । कमला पद्मा । पद्मात्वेन तस्याः कीर्तनमत्र चारु । कमलायाः सजातीये पादाम्भोजे रक्तिः । तस्याः करौ सरसिजे । ताभ्यां रागसंक्रान्तिः ॥

**संक्रान्तरागाविव पादपद्मौ** । स्वाभाविकरागस्य पादसम्बद्धकिरीटयोगिचेतःपद्माकरेभ्यः संक्रान्तिरुत्प्रेक्ष्यते । युञ्जानानां लक्ष्म्याश्च रागमनु रक्ते भवतः पादपद्मे । रागवद्विषये रागो न्याय्यः । कृते च प्रतिकृतिः कार्या ।

**मनवै** । पूर्वोक्तसर्वसम्बद्धत्वेन मनवै । योगिमनोयुक्तत्वेन, लक्ष्मीकरलालितत्वेन च मनवै । न पादाम्भोजमात्रमननम् । सर्वविशिष्टयोर्मननम् ।

**नुवै च** । 'तद्विप्रासो विपन्यवः' इति सातत्येन स्तवनान्वयित्वे मनोरथकाष्ठा ॥

**यद्बृन्दावनपण्डितं दधिरवैर्यत्ताण्डवं शिक्षितं**
**यल्लक्ष्मीकरसौख्यसाक्षिजलजप्रस्पर्धमानार्धि यत् ।**
**यद्भक्तेष्वजलस्थलङ्गमपि यद्गूत्यप्रसङ्गप्रियं**
**तद्विष्णोः परमं पदं वहतु नः श्रीरङ्गिणो मङ्गलम् ॥१२॥**

'नुवै' इति स्तवनमनोरथ उक्तः। स्तवः प्रस्तूयते। 'विपन्यवः' इति विविधं विचित्रं स्तवनम्। स्तुतिश्चोदाहृतश्रुत्युक्तविष्णुपदविषया । उदाहृतश्रुति-रत्नाचार्यबुद्धौ परिवर्तत इति तच्छ्रुतिस्थस्य 'विष्णोर्यत्परमं पदम्' इति चरमखण्डस्य 'तद्विष्णोः परमं पदम्' इति स्मारणात् स्पष्टीक्रियते ।

**यद्वृन्दावनपण्डितम्** । पादाम्भोजं न जडम्। किन्तु पण्डित-म्। सर्वज्ञस्य पदं पण्डितम्। वृन्दावनं कृत्स्नमनेन क्रान्तम्। तत्तत्सदृशं पाण्डित्यमस्य ।

**दधिरवैर्यत्ताण्डवं शिक्षितम्**। पण्डितश्चेत्कुतोऽस्य शिक्षेत्याकां-क्षा नियता । तत्रोच्यते बहुभ्यः श्रुतमनेन । बहुश्रुतमिदम्। दधि-मन्थरवैः शिक्षितं बोधितमिति । रवैरेव गुरुभिः शिष्येषु विद्याकलादि-संक्रमः । बहुवचनेन गुरुबहुत्वम्। पाण्डित्यं च नर्तने। 'दध्ना निमन्थ-मुखरेण निबद्धतालम्—' इति मथ्यमानदधिशब्दरूपतालमनु नर्तनाभ्यासः।

**यल्लक्ष्मीकरसौख्यसाक्षि** । वृन्दावनसञ्चरणेन, ताण्डवाभ्यासेन श्रान्तं पदं संवाह्यते दयितया लक्ष्म्या सुकुमारतमकराभ्याम् । अनेना-त्यन्तमार्दवव्यञ्जनं पादाम्भोजस्य । तेन च वृन्दावनचरणानर्हत्वं नर्तनसम-काठिन्यानर्हत्वं च। 'साक्षी चेताः' भगवान्। लक्ष्मीकरसौख्यसाक्षि पादा-म्भोजम्। लक्ष्मीकरस्पर्शसुखवेत्त्रिति वा, स्वसंवाहनेन लक्ष्मीकरयोः सञ्जा-तसुखद्रष्ट्रिति वा। 'कर्माध्यक्षः'।

**जलजप्रस्पर्धमानर्धि यत्** । सौकुमार्यं व्यञ्जितं पूर्वविशेषणेनेत्यु-क्तम्। लक्ष्मीः पत्नी । तस्याश्च भूयानभिमानः पक्षपातो नायकपादे । कथं तत्प्रोत्या पादसौकुमार्यनिर्णयः? यदि तेन न निर्णयः, आनीयताम-म्भोजम् । उभयं सन्तोल्यताम्। इदमेव पदं तदतिशयीत। प्रस्पर्धमा-नेति प्रोपसर्गेण पादस्य जयसूचनमिव । ऋद्धिश्च सौकुमार्यशोभासौग-न्ध्यादिमहिमा । 'तत्पादद्वितयस्य दास्यमपि न प्राप्नोति पङ्केरुहम्' इति

सामान्यस्त्रीविषये बिल्हणः ॥

**यद्भक्तेष्वजलस्थलज्ञम्** । उच्चनीचभेदानभिज्ञम् । सर्वत्र समम् । सर्वसुलभम् । जलजं जल एव रूढं भवेत् । इदं तु जले स्थले च रूढमूलं भवति । उभयोः स्पर्धायामेतद्विशेषं द्योतयितुं जलजशब्दग्रहणं पद्मे । पदे च जलस्थलोभयभवत्ववर्णनं च । जलं निम्नप्रदेशे स्यात् । निम्नं गच्छन्त्यापः । स्थलं चोच्चत्वद्योतकम् । पण्डितस्येदमेकमज्ञानं मर्षणीयम् ।

**दूत्यप्रसङ्गप्रियम्** । उच्चनीचत्वाज्ञत्वं न केवलमुच्चनीचव्यक्तिषु ; किं तूच्चनीचव्यापारेषु च । दूत्यमतिनिकृष्टम् । 'न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः' अत एव 'मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ' इत्युच्यते सर्वज्ञेन पण्डिततमेन हनूमता । दूत्यप्रसङ्गे रुचिः । तदवसरप्रतीक्षा ।

**तद्विष्णोः परमं पदम्** । निकृष्टतमव्यापाररूपदूत्यसक्तत्वमुक्तम् । तेनैवास्य परमोत्तमत्वरूपपरमत्वमिति व्यज्यते दूत्यप्रीतिवर्णनानन्तरं परमत्वग्रहणेन । विष्णोःपदमुच्चनीचेषु सर्वत्र व्याप्तं भवेत् । नीचेष्वसंयुक्तं चेद्विष्णोः पदं न स्यात् । विष्णोः पदं कृत्स्नबृन्दावनचारि । विष्णोः पदं दूत्यादिसर्वक्रियान्वयि ।

**श्रीरङ्गिणः** । विष्णोः श्रीरङ्गिण इति वा ; श्रीरङ्गिणो विष्णोरिति वा । 'रामाभिधानो हरिरित्युवाच ।' 'गोपवेषस्य विष्णोः' इति ।

**नो मङ्गलं वहतु** । जगन्मङ्गलवहत्वं पादस्य । 'एते हि सर्वलोकस्य योगक्षेमं विधास्यतः' इति वसिष्ठः पादुकाविषये । तत्र हेतुश्च पादुकयोः पादाभिन्नत्वमेव 'आर्यपादाविमौ–'। 'योगक्षेमं वहति भगवान् । मङ्गलं वहति पादः ॥

**शिञ्जानश्रुतिशिञ्जिनीमणिरवैर्वज्रारविन्दध्वज-**
**च्छत्रीकल्पकशंखचक्रमुकुरैस्तैस्तैश्च रेखामयैः ।**

ऐश्वर्येण जयं त्रिविक्रममुखं घुष्यद्भिराम्रेडितं
श्रीरङ्गेशयपादपङ्कजयुगं वन्दामहे सुन्दरम् ॥ १२४ ॥ 125

मननं कृतं 'मनवै' इति । 'नुवै' इति स्तवनं कृतम् । पादयोर्वन्दनं खलु प्रधानम् । तत्क्रियतेऽत्र । मङ्गलवहनं प्रार्थितम् । वज्रपद्मध्वजादि-रेखायोगेन परममाङ्गलिकत्वमुच्यते । दधिरवैः शिक्षणमुक्तम् । इदानीं स्वभूषणरवैर्जयोद्घोषणमुच्यते । 'तद्विष्णोः परमं पदम्' इति पादविषयिणी श्रुतिरुपात्ता पूर्वश्लोके । 'त्रीणि पदा विचक्रमे' 'यः पार्थिवानि विममे रजांसि' इत्यादिपादविजयोद्घोषिकाः श्रुतयः सन्ति । शब्दरूपाः श्रुतयः पादभूषणानि भवन्ति । ताभिश्च त्रिविक्रमापदानादिर्विजयोद्घोषणम् ।

ऐश्वर्येण त्रिविक्रममुखं जयमाम्रेडितं घुष्यद्भिः । त्रिविक्रम-यशोविषयर्चामुच्चैरुद्घोपकत्वानुभवो 'डिण्डिमस्तत्र वेद' इत्याचार्यैरूचे उत्तर-शतके ।

शिञ्जानश्रुतिशिञ्जिनीमणिरवैः । शब्दायमानाः श्रुतय एव शिञ्जानमणिनूपुराणीव ।

रेखामयैर्वज्रारविन्दध्वजच्छत्रीकल्पकशङ्खचक्रमुकुरैस्तैस्तैश्च । माङ्गलिकरेखाः सर्वोत्कर्षद्योतिकाः । ध्वजच्छत्रादिकं जयचिह्नम् ।

सुन्दरं श्रीरङ्गेशयपादपङ्कजयुगम् । अत्र वन्दनकाले चरणयु-गलस्य ग्रहणम् । तिष्ठतु विजयादिकम् । सौन्दर्यमेकमलमस्मान्वशी-कर्तुमिति सुन्दरपदेन व्यज्यते ॥

पुनाति भुवनान्यहं बहुमुखीति सर्वाङ्गुली-
स्खलज्झलितजाह्नवीलहरिबृन्दसन्देहदाः ।
दिवा निशि च रङ्गिणश्चरणचारुकल्पद्रुम-
प्रवालनखमञ्जरीर्नखरुचीर्विगाहेमहि ॥ १२५ ॥ 126

पादाङ्गुल्यः पादनखानि चानुभूयन्ते । 'नखमणिचन्द्रिकया निरस्ततापे' इति शुकः । महांस्तवः कृतः । ज्ञानयज्ञः प्रावर्तत । भगवद्विग्रहानुभवप्र-

तिपादकपूर्वशतकं च समाप्तप्रायम् । ज्ञानयज्ञान्तेऽवभृथः । भगवत्पा-दाङ्गुलिप्रसृताया गङ्गायास्तन्नखकान्तिभ्यश्चान्यत्र कुत्रावभृथसम्भवः। यादृशो यज्ञस्तादृशीयमवगाह्यमाना नदी। चरणयुगवन्दनं कृतम्। तत्फलं च शीतह्रदे ब्रह्मण्यवगाहः। ब्रह्मण्यवगाहश्च सततः स्यात्। न तत्र दिवारात्रिविभागः। सकृद्दिवा भवति।

**पुनानि भुवनान्यहं बहुमुखीति** । त्रिपथगा प्रसिद्धा गङ्गा । अहं दशभ्योऽप्यङ्गुलीभ्यो बहुमुखी प्रसृत्य सर्वान् लोकान् पावयानीति प्रसृतेवेत्युत्प्रेक्ष्यते ।

**चरणचारुकल्पद्रुमप्रवालनखमञ्जरीः** । चरणौ कल्पद्रुमप्रवालौ । नखानि तत्र प्रत्यग्रस्तबकाः ।

**नखरुचीः**। नखकान्तिप्रवाहान् ।

**विगाहेमहि**। अवगाह्य स्नायाम ॥

**श्रीरङ्गेन्दोः पदकिसलये नीलमञ्जीरमैत्र्या**
**वन्दे धुन्तप्रणयिमधुपव्रातराजीवजैत्रे ।**
**नित्याभ्यर्चानतविधिमुखस्तोमसंशय्यमानै-**
**र्हैमाम्भोजैर्निबिडनिकटे रामसीतोपनीतैः ॥**

अंगुलीभ्यः प्रवहत्कान्तिप्रवाहा वर्णिता अवभृथस्नानलाभाय । पादाम्भोजवर्णनेन शतकोपसंहारो न्याय्यः । तदेवास्माकं परमा गतिः। अम्भोजानि सङ्घशः स्युः । पादाम्भोजनिकटे अम्भोजान्तराणि निबिडं दृश्यन्त इति कथ्येत । वन्दामहे पादपङ्कजयुगलमित्युक्तम् । नाहमेको वन्दे । सीतारामौ वन्देते । विधिमुखानि नित्यं नमन्तीत्युच्यते ।

**श्रीरंगेन्दोः पदकिसलये**। वन्दनकाले पूर्णचन्द्रवत्सौम्यत्वं मुखस्य ।

**नीलमञ्जीरमैत्र्या** । पूर्वं शिञ्जानश्रुतिभूषितत्वमुक्तम्। अत्र नीलमणिनूपुरभूषितत्वमुच्यते । तन्मैत्री सम्पाद्यते वर्ण्यमानराजीवजयाय । ससहायेन जयः सुशकः ।

**वृन्तप्रणयिमधुपव्रातराजीवजैत्रे** । वृन्ते मधुकरमालाः । तद्विशिष्टस्य राजीवस्य जयो नीलमञ्जीरभूषितत्वेन साध्यते । राजीवस्य प्रणयिमधुपसहायवत्त्वे तज्जयाय पदकिसलयस्यापि नीलमञ्जीरमैत्री । नियमेन जयवत् अजितस्य पदत्वात् । जैत्रं प्रबलशत्रुविजयकाले स्वपक्षस्थैः सर्वैर्वन्दनं भवति 'जय विजयीभवेत्युद्धोषपूर्वकम् ।

**नित्याभ्यर्चानतविधिमुखस्तोमसंशय्यमानैः** । रामसीतासमर्पितहेमाम्भोजानि वन्दमानचतुर्मुखमुखारविन्दस्तोमत्वेन संशय्यन्ते । ब्रह्मा नित्याराधको भगवतः । एकस्यैव ब्रह्मणश्चत्वारि मुखानि, वेधसामनेकत्वात्तेषां मुखस्तोमानि वा स्तोमशब्देन गृह्यन्ते ।

**रामसीतोपनीतैर्हैमाम्भोजैः** । 'मनुकुलमहीपालव्यानम्रमौलिपरम्परामणिमकरिकारोचिर्नीराजितांघ्रिसरोरुहः । स्वयमथ विभो स्वेन श्रीरङ्गधामनि मैथिलीरमणवपुषा स्वार्हाण्याराधनान्यसिलम्भितः ।' इत्युत्तरशतके मैथिलीरमणवपुषा स्वेनैवाराधनमुपपाद्यते । तत्पूर्वश्लोके ब्रह्मणाऽऽराधनमुच्यते । अपरिमितविभवाश्चक्रवर्तिनः स्वर्णपुष्पाणि समर्पयेयुः । 'आप्रणखात् सर्व एव सुवर्णः' इति हिरण्मयस्य पुरुषस्य पादाम्भोजं हेमाम्भोजं स्यात् । तस्मै तदनुरूपस्वर्णाम्भोजसमर्पणमुचितम् । 'सह पत्न्या विशालाक्ष्या—' इति यद्यपि सहयोगेन सीताया अप्राधान्यं सूच्यत इव 'तं चेयमसितेक्षणा' इत्यत्रेव नारायणोपगमने तस्या उत्फुल्लनयनत्वार्थकाविशालाक्षित्वविशेषणेन तस्या अपि प्राधान्यं व्यज्यत इवर्षिणा । दम्पत्योः सहाधिकारत्वात् 'पत्युर्नो यज्ञसंयोगे' इत्यनया साहित्यस्यावश्यकत्वात् सहशब्दप्रयोगः । नाप्राधान्यसूचनाय । पत्न्या एव विशेषणं दत्तं विशालाक्ष्येति । न पत्युः । दम्पत्योः सहाधिकार इति समप्राधान्यं दम्पत्योः । 'नारायणमुपागमत्' इतिवदुपोपसृष्टोपनीतशब्दप्रयोगः । अत्र शतकनिगमने द्वयानुगामित्वम् । अस्मिन् श्लोके चरणयोर्द्वित्वग्रहणं पूर्वश्लोकद्वय-

गृहीतैकत्वहानेन । वन्दे इति प्रणतिः । रामसीताग्रहणेन 'नारायणमुपागमत्' इति नारायणत्वस्मारणमपि द्वयं प्रत्यभिज्ञापयति । इन्दुत्ववर्णनं सौम्यत्वे सति दातृत्वं व्यञ्जयति ।

निबिडनिकटे । निरतिशयप्रसन्नो भगवानस्मिन्नवसरे । निबिडं सङ्घीभूतानि पद्मान्यस्य पादाम्भोजस्य निकट इति पद्मबहुत्वमाराधकादरातिशयव्यञ्जकम् ।

वन्दे । प्रणमामि । अत्र शतकसमाख्या कथं सङ्गच्छेत । शतकाधिकानि नक्षत्रसंख्यानि पद्यानि निबद्धानि । अत्र श्रीरङ्गेन्दुर्वर्णितः । तारकेश इन्दुः । शतकसंख्या नक्षत्रसंख्यया समुच्चीयते । इदं सूच्यत इव श्रीरङ्गेन्दुरिति ।

सुदुर्बोधा व्यङ्ग्यघना भट्टार्याणामियं स्तुतिः ।
भावलेशोऽपि चेद्ग्रातः स कटाक्षैकलम्भितः ॥